'उत्तरहीने' उत्तरेण—अष्टरूपेण हीने सति 'प्रक्षिपेत्' न्यसेत् 'आदिं' पञ्चकरूपम्, ततो जातमिदम् २८९, तदिदं 'अन्तिमधनं' सीमन्ताख्यपर्यन्तप्रस्तटनरकावासप्रमाणं संपद्यते। यदा त्वन्त्यधनमेव 'आदियुतं' मूलसमेतं चतुर्णवतित्रिशतप्रमाणं सत् 'गच्छार्द्धगुणं तु' गच्छस्यैकोनपञ्चाशल्लक्षणस्यार्द्धेन—दलेन संगुणितं पुनः क्रियते तदा 'सर्वधनं' सर्वप्रस्तटनरकावासप्रमाणं भवतीति ॥ ४६ ॥ "गच्छार्द्ध-संगुणं" इत्युक्तम्, अयं च गच्छो विषमपदव्यवस्थितत्वेनार्द्धेन विभक्तुं [न] शक्यते, अतः किं कर्त्तव्यम्? इत्याह—

जो गच्छु न देअद्धं, तस्स उ रासीएँ गिण्हिऊणद्धं।
गच्छगुणं सव्वधणं, एवं सत्तण्ह वि करेज्जा ॥ ४७ ॥

यो 'गच्छः' एकोनपञ्चाशल्लक्षणः 'न' नैव 'दत्ते' प्रयच्छति 'अर्द्धं' द्विभागरूपं 'तस्य तु' गच्छस्य पुनः संबन्धिनः 'राशेः' गुण्यस्य 'गृहीत्वा' आदाय 'अर्द्धं' उक्तलक्षणं 'गच्छगुणं' कुर्यात् ततः सर्वधनं भवति। यथा—एकोनपञ्चाशल्लक्षणे गच्छेऽर्द्धमददाने तेन यो राशिर्गुणयितुमिष्टः चतुर्णवतशतत्रयमानः ३९४, तस्यार्द्धं सप्तनव-त्यधिकशतमानं १९७ गृहीत्वा गच्छेनैकोनपञ्चाशल्लक्षणेन गुण्यते जा-तानि षण्णवतिशतानि त्रिपञ्चाशदधिकानि ९६५३, एतच्च सर्वधन-प्रमाणमिति। एवमविभागेनावलिकाप्रविष्टनरकावासप्रमाणं प्रतिपाद्य सांप्रतं प्रतिपृथिवि तदेवातिदिशन्नाह—'एवं' सामान्यन्यायेन 'सप्ता-नामपि' रत्नप्रभादीनां पृथ्वीनां प्रत्येकं करणं 'कुर्यात्' विदधीत, ततश्चान्तिमधनं सर्वधनं चागच्छति। यथा—रत्नप्रभायां पर्यन्तप्रस्तटे आवलिकागतनरकावासप्रमाणं द्वे शते त्रिनवते २९३ एष किलादिः,

उत्तर ८, त्रयोदश प्रस्तटा गच्छ १३, ततो गच्छोत्तरयो संवर्गे जात चतुरुत्तर शतम् १०४, तस्मिन्नुत्तरहीने षण्णवतिप्रमाणे कृते आदिना त्रिनवत्यधिकद्विशतप्रमाणेन युक्ते सति लब्ध सीम न्तकधनमिदम्— ३८९। यदा अत एव राशे प्रथमप्रस्तटा सर्वदन्तमानेष्टमिष्यते तदामौ राशिरादिनायुक्तो विधीयते जात ६८२, ततो गच्छस्य त्रयोदशलक्षणस्यार्द्धोमावाद्युक्त एव राशिरर्द्धीक्रियते जात ३४१, तस्मिन् गच्छे गुणिते लब्ध सर्वधन ४४३३। एव शर्कराप्रमादिष्वपि आदिप्रमाण गच्छप्रमाण च विज्ञाय पूर्वक्रमेणान्तिमधन च स्वयमेवाभ्यूह्य वाच्यमिति ॥ ४७ ॥ साम्प्रतमाद्युत्तरगच्छक्रमेणैवा स्वमध्यमसर्वधनानि यथा ज्ञायन्ते तथा करणमाह—

गच्छगुणमुत्तर उत्तरहीन आइसहियमन्तधणं ।
आदिजुयद्ध मज्झिमधण तु गच्छाहय सव्वं ॥४८॥

'गच्छगुण' गच्छाभ्यस्त 'उत्तरे' उत्तररूपमेव क्रियते, ततस्तदेव 'उत्तरेणैव' उत्तरप्रमाणराशिनोनीकृत सदा 'आदिसहित' आदिराशिना युक्त विधीयते तदा 'अन्त्यधन' पर्यन्तवर्तिप्रतरनरकावासप्रमाण भवति। तथा 'आदियुतार्द्ध' तस्यैवादियुतस्य यदर्द्ध दलम्, तत्किम्? इत्याह—'मध्यमधन' मध्यवर्तिप्रतरनरकाय भवति। तुशब्दो भिन्नक्रमे गच्छाहतमित्यस्यानन्तर द्रष्टव्य, ततश्च मध्यमधनमेव 'गच्छाहत तु' गच्छाभ्यस्त पुन 'सर्व' इति सर्वधन भवति। यथा—गच्छेनैकोनपञ्चाशद्रूपेण गुणितमुत्तरमष्टलक्षण जात ३९२, यदेतदेवोत्तरहीन पञ्चकलक्षणादिसहित च क्रियते तदा जातमिद ३८९, एतदेव चान्त्यधनम्। यत्र अयमेव राशिरादियुतोऽर्द्धीकृतस्तदा जात-

मिदं १९७, एतदेव च मध्यप्रतरस्य पञ्चविंशतितमस्य नरकावासप्रमाणं भवति । पुनरस्मिन्नेव राशावेकोनपञ्चाशत्संख्यगच्छगुणिते संपन्नमदः ९६५३, एतत्तु सर्वधनमिति । एवं रत्नप्रभादिष्वपि षट्सु पृथिवीष्वन्त्यमध्यमसर्वधनान्यानेतव्यानि । यथा—षष्टपृथिव्यां गच्छेन त्रिकलक्षणेन गुणितमुत्तरमष्टलक्षणं जाता चतुर्विंशतिः, ततोऽस्यामुत्तरोनायां त्रयोदशलक्षणेनादिना सहितायां च जातैकोनत्रिंशत् २९, एतत्तत्रान्त्यप्रस्तटधनं भवति । यदाऽस्यैवादियुक्तस्यार्द्धमेकविंशतिलक्षणं क्रियते तदा तन्मध्यधनं भवति । एतदेव गच्छाहतं सर्वधनं भवति, तच्च त्रिषष्टिलक्षणम् ६३ इति ॥ ४८ ॥ संप्रति प्रतिपृथिवि आवलिकागतनरकावासप्रमाणं प्रतिपादयितुमिच्छुः सुज्ञानत्वान्मुखकरणमनादृत्य भूमिकरणं तावत्प्रतिपादयन्नाह—

सगपयरा रूवूणा, अट्ठगुणा सोहियाहि समुहाओ ।
जं तत्थ सुद्धसेसं, इच्छियपयरस्स सा भूमी ॥ ४९ ॥

'स्वकप्रतरान्' प्रतिपृथिवि त्रयोदशैकादशनवादीन् 'रूपोनान्' एकेन हीनान् तथा 'अष्टगुणान्' अष्टभिर्गुणितान् सतः, किम्? इत्याह—'शोधय' अपनय त्वम्, कुतः सकाशात्? 'स्वमुखात्' आत्मीयप्रथमप्रतरनरकावासप्रमाणात्, ततः यत् 'तत्र' राशौ 'शुद्धशेषं' अवशिष्टमित्यर्थः, किम्? इत्याह—'ईप्सितप्रतरस्य' त्रयोदशादेः सा 'भूमिः' तलगतनरकावासप्रमाणं भवति । यथा—रत्नप्रभायां स्वकप्रतरास्त्रयोदश, ते रूपोना जाता द्वादश, एते चाष्टगुणा जाता षण्णवतिः ९६, तस्यां च स्वमुखाद्यादेकोननवत्यधिकशतत्रय ३८९—प्रमाणाच्छोधितायां जातं २९३, इयमेव तत्र भूमिः । एवं सर्वत्र

योद्धव्यमिति ॥ ४९ ॥ इदानीं मुखभूमिप्रमाणानि षट्सु पृथ्वीषु स्वयमेव ग्रन्थकार आह—

तिण्णि सय अउणनउया, दो तेणउया य होंति पढमाए।
दो सय पंचासीया, पंचोत्तर दोण्णि बितियाए ॥ ५० ॥
सत्ताणउय च सय, तेत्तीस सय सय च पणुवीस।
सत्तत्तरि अउणत्तरि, सत्तत्तीसा य उणतीसा ॥ ५१ ॥
तेरस मुहभूमिओ, दो दो रयणाइछट्ठिअंताण।
सेढिंदयाण करण, सेढिंदयवज्जिया सेसा ॥ ५२ ॥

त्रीणि शतान्येकोननवतानि ३८९ द्वे शते त्रिनवत्यधिके च २९३ भवतः 'प्रथमायां' रत्नप्रभायामित्यर्थः, यथाक्रमं मुखभूमिप्रमाणमेतत्। तथा द्वे शते पञ्चाशीते २८५ पञ्चोत्तरे द्वे शते २०५ 'द्वितीयायां' शर्कराप्रभायामित्यर्थः ॥ ५० ॥ तथा सप्तनवतं च शतं १९७ त्रयस्त्रिंशं शतम् १३३ एतत्तृतीयायामिति। तथा शतं च पञ्चविंशं १२५ सप्तसप्ततिः ७७ चतुर्थ्याम्। तथा एकोनसप्ततिः ६९ सप्तत्रिंशच्च ३७ पञ्चम्याम्। तथा एकोनत्रिंशत् २९ ॥ ५१ ॥ त्रयोदश १३ षष्ठ्याम्। किम्? इत्याह—'मुखभूमी' यथाक्रमं मुखभूमिप्रमाणे भवतः। कथम्? इत्याह—द्वे द्वे यथाक्रमम्, कासाम्? इत्याह—'रत्नादिषष्ठ्यन्तानां' रत्नप्रभादीनां षष्ठपृथ्वीपर्यन्तानां पृथ्वीनाम्। यच्च पूर्वं "प्रथमायां द्वितीयायां" इति भणनेऽपि पुनरिह तयोरुपादानं कृतं तत्समुदायधर्मानुवर्तनार्थम्। ततः किम्? इत्याह—'श्रेणीन्द्रकाणां' आवलिकागतनरकावासलक्षणानां प्रमाणानयनाय 'करणं' उपायविशेषः "मुहभूमिसमासद्ध" (गा० ९४) इत्यादिलक्षणं

वर्तते। इत्थं षष्ठीं यावत्करणबीजमुक्तं सप्तम्यां का वार्त्ता ? इत्याह— ' श्रेणीन्द्रकवर्जिता ' आवलिकागतनरकावासविहीना ' शेषा ' सप्तमपृथ्वी, तस्यां हि त्वेकैकस्यैव नरकावासस्य भावात् द्विप्रभृतीनां च लोके शास्त्रे च श्रेणित्वेन रूढत्वादिति ॥ ५२ ॥ इत्थं प्रतिपृथिवि मुखभूमिप्रमाणा [ नि ] प्रतिपाद्येदानीं सर्वपृथ्वीगतावलिकाप्रविष्टनरकावासप्रमाणानयनायैतदेवाह—

पत्थडतेरे पढमिल्लुयम्मि भूमी उ सा भवे णियमा ।
माघवतीते पणगं, मुहं पुणो तं वियाणाहि ॥ ५३ ॥

' पत्थडतेरे ' त्ति प्रस्तटत्रयोदशके रत्नप्रभापृथ्वीसंबन्धिनि ' पढमिल्लुयम्मि ' त्ति यः प्रथमप्रस्तटस्तत्र याऽऽवलिकागतनरकावाससंख्या, किम् ? इत्याह—' भूमिस्तु ' भूमिरेव सा ' भवेत ' स्यात ' नियमात् ' निश्चयेन । तथा ' माघवत्यां ' सप्तमपृथिव्यां यत्पञ्चकं नरकावासानां ' मुखं ' आदिः पुनः ' तत ' पञ्चकं ' विजानीहि ' अवबुध्यस्व । अत्राह रत्नप्रभादिपृथिवीष्वाद्यन्तप्रस्तटनरकावाससंख्ये मुखभूमितयोक्ते, इह तु किमिति तद्वैपरीत्येन मुखभूमिज्ञापना कृता ? अत्रोच्यते, विचित्रविवक्षाप्रधानत्वाच्छास्त्रकाराणामित्थमपि न कश्चिद्दोषः, परमार्थतस्तुल्यफलत्वात् । एवमन्यत्रापि व्यत्ययनिर्देशहेतुर्वाच्य इति ॥ ५३ ॥

पृथक्पृथक् पृथ्व्याश्रयेण मुखभूमियन्त्रकमिदम्—

| नरकना० | रत्नप्र० | शर्करा० | वालुका० | पंकप्र० | धूमप्र० | तम.प्र० | सप्तमपृथ्व्यां ७ | भूमि. | ३८९ |
|---|---|---|---|---|---|---|---|---|---|
| मुखानि. | ३८९ | २८५ | १९७ | १२५ | ६९ | २९ | | | |
| भूमय· | २९३ | २०५ | १३३ | ७७ | ३७ | १३ | | मुखम. | ५ |

इत्थं करणोपयोगिनीं परिभाषां प्रतिपाद्य करणमाह—

चर्थपदं पृच्छति। मध्यमा तूभयथाप्यागच्छति, अल्पतरगौरवविषयत्वात् । अभ्यन्तरया वाऽऽदिष्टमर्थपदं तया सह प्रवघ्नाति ग्रन्थिबन्धं करोतीति । बाह्या बाह्यत्वेनानाकारितैवागच्छति, अल्पतमगौरवविषयत्वात्, तस्याश्चार्थपदं वर्णयत्येवेति(--पदमेव वर्णयतीति) । चकारो भिन्नक्रमे, तत आत्मरक्षकाश्च, सन्नद्धबद्धकवचाः उत्पीडितशरासनपट्टिकाः गृहीतविविधप्रहरणाः सौधर्मसभायामास्थानगतं स्वप्रभुं परिक्षिप्य वक्रपाल्यो ये वर्तन्ते । ' अनीकानि ' हस्त्यश्वरथपदातिवृषभगन्धर्वनाट्यलक्षणानि सप्त । तत्राद्यानि पञ्च संग्रामोपयोगीनि, द्वे तु भोगफले इति । 'तथा' इति समुच्चये । याश्च ' अग्रमहिष्यः ' पट्टराज्ञीसदृशास्त्रिदशपतिपत्न्यः ताः सौधर्मे ईशाने कल्पविमानेषु बोद्धव्या इति ॥ २७४ ॥ एतदेव सविशेषं भावयितुमाह—

परिसाईया सव्वे, सोहम्मे जे य होंति ईसाणे ।
पत्तेयविमाणेसुं, वसंति न उ सक्कतणएसु ॥ २७५ ॥

' परिषदादयश्च ' देवविशेषा अनन्तरमेव निरूपिताः सर्वे सौधर्मे ये च भवन्ति ईशाने, ते किम् ? इत्याह—'प्रत्येकविमानेषु' पृथक्पृथगवस्थितलक्षणेषु वसन्ति, ' न तु ' न पुनः ' सक्कतणएसु ' त्ति शक्रसत्कनिलयेषु, सेवावसरागतानामेव पञ्चस्वपि शक्रविमानेषु परिषदादीनामवस्थानसंभवादिति ॥ २७५ ॥ उपरितनदेवलोकेषु परिषदादिदेवनिवासनिरूपणायाह—

कप्पविमाणेसु भवे, परिसाओ आयरक्खऽणीया य ।
एगविमाणे सामाणिया य तह लोगपाला य ॥ २७६ ॥

' कल्पविमानेषु ' उक्तलक्षणेषु 'भवेयुः' निवसेयुः, के? इत्याह—

तीसा य पणुवीसा, पनरस दस चेव सयसहस्साइं ।
तिरणेगं पंचूणं, पंचेव अणुत्तरा णिरया ॥ ५६ ॥

त्रिंशत् चकारो भिन्नक्रमे ततः पञ्चविंशतिश्च पञ्चदश दश चैव 'शतसहस्राणि' लक्षा इत्यर्थः, त्रीणि एकं शतसहस्रं, कीदृशम्? इत्याह—पञ्चोनम्, पञ्चैव 'अनुत्तराः' अत्यन्ताधमतया सर्वनरकावासप्रधाना निरयाः । अयमत्र भावः—रत्नप्रभायां त्रिंशन्नरकावासशतसहस्राणि भवन्ति । शर्कराप्रभायां पञ्चविंशतिः । वालुकाप्रभायां पञ्चदश । पङ्कप्रभायां दश । धूमप्रभायां त्रीणि । तमःप्रभायामेकं शतसहस्रं परं पञ्चभिर्नरकावासैरूनम् । महातमःप्रभायां पञ्चैव नरकावासा इति ॥ ५६ ॥

इत्थं सामान्येन रत्नप्रभादिषु पृथ्वीषु पृथक्पृथक्सर्वनरकावासप्रमाणं प्रतिपाद्य संप्रति तास्वेवावलिकाबाह्यांस्तदितरांश्च नरकावासान् प्रमाणतः प्रतिपादयन् गाथासप्तकमाह—

सत्तट्ठा पंच सया, पणणउइ सहस्स लक्ख उणतीसं ।
रयणाए सेढिगया, चोयाल सया उ तेत्तीसं ॥ ५७ ॥

'सत्तपट्टानि' सप्तषष्ट्यधिकानि पञ्च शतानि पञ्चनवतिः सहस्राणि लक्षा एकोनत्रिंशत् पदैकदेशेऽपि पदसमुदायोपचारात् 'रत्नायां' रत्नप्रभायां वक्ष्यमाणविशेषणान्यथानुपपत्तिवशेन श्रेणिबाह्या नरकावासा बोद्धव्याः, अङ्कतश्च २९९५५६७ । श्रेणिगता नरकावासाश्चतुश्चत्वारिंशच्छतानि, 'तुः' विशेषणार्थः, 'त्रयस्त्रिंशानि' त्रयस्त्रिंशत्समधिकानि भवन्ति, अङ्कतोऽपि ४४३३ ॥ ५७ ॥

सत्ताणउइ सहस्सा, चउवीसं लक्ख तिसय पंचहिया ।
बीयाए सेढिगया, छव्वीस सया उ पणणउया ॥ ५८ ॥

सप्तनवतिः सहस्राणि चतुर्विंशतिर्लक्षाणि शतानि पञ्चाधिकानि 'द्वितीयायां' शर्कराप्रभायामावलिकाबाह्यनरकावासप्रमाणमेतत्, अङ्कतोऽपि [ २४९७३०५ । श्रेणिगता नरकावासा षड्विंशति शतानि पञ्चनवत्यधिकानि, 'तु' पुनरर्थे, भवन्ति, अङ्कतश्च ] २६९५ ॥५८॥

पण सया पणयाला, अडनउइ सहस्स लक्ख चोद्दस य ।
तइयाए सेढिगया, पइन्नगा चोद्दस सया उ ॥ ५९ ॥

पञ्च शतानि 'पणयाल' त्ति पञ्चचत्वारिंशदधिकान्यष्टानवतिः सहस्राणि लक्षाश्चतुर्दश च 'तृतीयायां' वालुकाप्रभापृथिव्यामावलिकाव्यतिरिक्तनरकावासप्रमाणं भवति, अङ्कापेक्षयापि १४९८५१५ । श्रेणिगता नरकावासा पञ्चाशीतानि चतुर्दश शतानि, 'तु' पुनरर्थे, भवन्ति बोद्धव्याः, अङ्कतोऽपि १४८५ ॥ ५९ ॥

तेणउया दोण्णि सया, नवनउइ सहस्स नव य लक्खाइं ।
पंकाए सेढिगया, सत्त सया हुंति सत्तहिया ॥ ६० ॥

त्रिनवते द्वे शते नवनवति सहस्राणि नव लक्षाणि 'पङ्कायां' पङ्कप्रभायां चतुर्थपृथिव्यां श्रेणिवर्जितनिरयावासप्रमाणमेतत्, अङ्कतोऽपि ९९९२९३। श्रेणिगता निरया सप्त शतानि भवन्ति सप्ताधिकानि, अङ्कतोऽपि ७०७ ॥ ६० ॥

सत्त सया पणतीसा, नवनउइ सहस्स दो य लक्खाइं ।
धूमाए सेढिगया, पणसट्ठा दो सया हुंति ॥ ६१ ॥

सप्त शतानि पञ्चत्रिंशानि नवनवति सहस्राणि द्वे च लक्षे 'धूमायां' धूमप्रभायां पञ्चमपृथिव्यामावलिकाविप्रकीर्णनिरयावासप्रमाण-

मिदम्, अङ्कतश्च २९९७३९ । श्रेणिगता नरकावासाः पञ्चषष्टे द्वे शते भवतः, अङ्कतोऽपि २६५ ॥ ६१ ॥

णवणउइं च सहस्सा, णव चेव सया हवंति बत्तीसा ।
पुढवीए छट्ठीए, पइण्णगाणेस संखेवो ॥ ६२ ॥
सेढिंदयणरया णं, तेवट्ठी खलु हवंति छट्ठीए ।
पंचेव सत्तमीए, पइण्णगा णत्थि बोधव्वा ॥ ६३ ॥

नवनवतिश्च सहस्राणि नव चैव शतानि भवन्ति द्वात्रिंशानि 'पृथिव्यां षष्ठ्यां' तमःप्रभाभिधानायां 'प्रकीर्णकानां' श्रेणिबाह्यनरकावासानां 'एषः' अनन्तरोक्तः 'संक्षेपः' संक्षिप्यते—वस्त्वियत्तयाऽवध्रियतेऽनेनेति संक्षेपः—प्रमाणं भवतीति, अङ्कतोऽपि ९९९३२॥६२॥ 'श्रेणीन्द्रकनरकाः' आवलिकाप्रविष्टनरकावासाः 'णं' इति वाक्यालङ्कारे त्रिषष्टिः ६३ । 'खलु' इति निश्चये 'भवन्ति' संपद्यन्ते षष्ठ्याम्, पुनः षष्ठपृथ्वीग्रहणं विस्मरणशीलशिष्यावबोधार्थम् । तथा पञ्चैव सप्तम्यां दिग्गताः । 'प्रकीर्णकाः' विप्रकीर्णनरकावासा न सन्तीति बोद्धव्या इति ॥ ६३ ॥ इत्थं प्रत्येकं पृथ्वीष्वावलिकाबाह्यानां तदितरेषां च नरकावासानां प्रमाणं प्रतिपाद्य संप्रति सर्वावलिकाबाह्यनरकावासप्रमाणं तदितरप्रमाणमुभयप्रमाणं चाभिधित्सुर्गाथाद्वयमाह—

एवं पइण्णगाणं, तेसीतिं होंति सयसहस्साइं ।
णउइं नावि सहस्सा, तिण्णि सया चेव सीयाला ॥ ६४ ॥
णव चेव सहस्साइं, छ चेव सया हवंति तेवण्णा ।
सेढिंदयणिरयाणं, एवं दुहओ वि चुलसीति ॥ ६५ ॥

'एए' प्रत्येकगणितास्त्रयः सर्वेषां मीलने 'प्रकीर्णकानां' आवलिकाबाह्यनरकावासानां त्र्यशीतिर्भवति शतसहस्राणि नवतिश्चापि सहस्राणि त्रीणि शतानि चैव 'सीयाल' त्ति सप्तचत्वारिंशानि, अङ्कतोऽपि ८३९०३४७ ॥ ६४ ॥ नव चैव सहस्राणि षट् चैव शतानि भवन्ति 'तेवण्ण' त्ति त्रिपञ्चाशदधिकानि 'श्रेणीन्द्रकनिरयाणां' आवलिकाप्रविष्टनरकावासलक्षणानां सर्वेषां मेलने सति, अङ्कतोऽपि ९६५३ । 'एए' प्रत्येकगणितयोः 'उभयतोऽपि' उभयोरपि राश्योर्यदा समुदायेन गणना क्रियते तदा चतुरशीतिशतसहस्राणि भवन्तीति, अङ्कतोऽपि ८४००००० ॥ ६५ ॥ इदानीं प्रकीर्णकनामानो नरकावासा यत्रावतिष्ठन्ते तत्स्थाननिरूपणायाह (ग्रंथाग्र ५००)—

दिसि विदिसि अंतरगया, नरया उ पइण्णगा मुणेयव्वा ।
छसु वि पुढवीसु भणिया, जहाणुपुव्वीए पविभत्ता ॥ ६६ ॥

विभक्तिवचनव्यत्ययाद् दिशां विदिशां च 'अन्तरगताः' अन्तरालवर्तिनः 'नरकास्तु' निरयाः पुनः प्रकीर्णका ज्ञातव्याः । कासु पृथ्वीष्वयं व्यवहारः ? इत्याह—'षट्स्वपि' षट्स्वेव पृथ्वीषु न तु सप्तम्यामपि । 'भणिताः' आगमज्ञैर्निरूपिताः 'यथानुपूर्व्या' यत्प्रकारयाऽऽनुपूर्व्या ते व्यवस्थितास्तयैवमेव । ते च कथं भूताः ? इत्याह—'प्रविभक्ताः' प्रविभज्यन्ते—नानासंस्थानरूपतया विकल्प्यन्ते ये ते तथेति ॥ ६६ ॥ सम्प्रत्यावलिकाप्रविष्टानां नरकावासानामवस्थानक्रमं प्रतिपादयितुमिच्छुराह—

सीमंतगो उ उवरिं, सव्वपढे होइ मज्झयारो ।
सव्वेसिं णिरयाणं, एगुज्ज एक्कमेक्कस्स ॥ ६७ ॥

'सीमन्तकस्तु' सीमन्तकनामैव नरकेन्द्रकः 'उपरि' प्रथम इत्यर्थः, 'सर्वाधः' सर्वेषामिन्द्रकाणामधोभागवर्ती भवति 'अप्रतिष्ठानः' सप्तमपृथ्वीन्द्रकः। शेषाणां का वार्ता? इत्याह—'सर्वेषां' निरयाणामावलिकागतानां मध्ये 'एकः' इति एकैको नरकावासः 'ऋजुः' समश्रेणिव्यवस्थिततयाऽभिमुखः, कस्य? इत्याह—एकैकस्य नरकावासस्य। इदमुक्तं भवति—सर्वेऽपीन्द्रकनरकावासाः समश्रेणितया ऊर्ध्वाधोभावेन व्यवस्थिताः, ये च शेषा आवलिकाप्रविष्टा नरकावासास्तेऽप्येवमेवेति ॥ ६७ ॥ अथावलिकाप्रविष्टेष्वेव वृत्तत्र्यस्रचतुरस्रनरकावासप्रमाणप्रतिपादनार्थमेकदिगपेक्षया प्रतिपृथिवि मुखभूमिप्रमाणानयनाय करणं तावदाह—

अउणापन्नं पढमं, सेसा पयरंतररहिय होंति मुहा।
सगपयरेहि विरहिया, रूवूणेहिं मुहा भूमी ॥ ६८ ॥

एकोनपञ्चाशत्प्रथमं मुखम्। 'शेषाणि' शर्कराप्रभादिपृथिवीसंबन्धीनि 'परप्रतररहितानि' उपरितनपृथ्वीप्रस्तटप्रमाणरहितानि उपरितनपृथ्वीमुखान्येव भवन्ति मुखानि। तथा 'स्वकप्रतरैः' त्रयोदशादिभिः 'विरहितानि' परित्यक्तानि, कीदृशैः? इत्याह—'रूपोनैः' रूपरहितैर्द्वादशादिप्रमाणैरिति भावः, 'मुखानि' विवक्षितपृथ्वीगतान्येव 'भूमयः' तलानि भवन्ति। अयमत्र तात्पर्यार्थः—यथा रत्नप्रभायामेकोनपञ्चाशन्मुखम्, एतदेव शर्कराप्रभायां रत्नप्रभाप्रतरहीनं संजातषट्त्रिंशत्संख्यं मुखम्, एतदेव वालुकाप्रभायामेकादशलक्षणशर्कराप्रभाप्रतररहितं पञ्चविंशतिलक्षणं मुखम्। एवं तावज्ज्ञेयं यावत्तमःप्रभायां चत्वारो मुखमिति। एवं त्रयोदशैकादशनवकादिलक्षणैः स्व-

हितानि, कथंभूतैः? इत्याह—रूपोनैः मुखानि भूमयो भवन्ति। यथा—रत्नप्रभायामष्टचत्वारिंशन्मुखम्, तदेव स्वप्रतरै रूपोनैर्द्वादशप्रमाणैरूनीकृतं जाता षट्त्रिंशत्, इयमेव तत्र भूमिः। तथा शर्कराप्रभामुखं पञ्चत्रिंशद्रूपं स्वकप्रतरै रूपोनैरूनीकृतं [संजाता पञ्चविंशतिः, इयमेव तत्र भूमिः। तथा वालुकाप्रभामुखं चतुर्विंशतिरूपं स्वकप्रतरै रूपोनैरूनीकृतं] संजाताः षोडश, एत एव तत्र भूमिः। एवमन्यास्वपि पृथ्वीषु स्वमुखेभ्यो रूपोनस्वप्रतरहीनेभ्यो भूमयः साध्या इति ॥ ७० ॥ अथ पूर्वगाथोक्तोपायलब्धमेव मुखप्रमाणं भूमिप्रमाणं च क्रमेण प्रतिपादयन्नाह—

अडयाला पणतीसा, चउवीसा पनरस ट्ठ तिण्णेव।
छत्तीसा पणुवीसा, सोलस णव चउर एगं च ॥ ७१ ॥

अष्टचत्वारिंशत् पञ्चत्रिंशत् चतुर्विंशतिः पञ्चदशाष्टौ त्रय एवेति रत्नप्रभादिषु षट्सु पृथ्वीषु विदिक्षु [मुखानि], भूमयस्तु षट्त्रिंशत् पञ्चविंशतिः षोडश नव चत्वार एकश्चेति विदिक्ष्वेशान्यादिषु। स्थापना—

| नरकनामा० | रत्न० | शर्क० | वालु० | पंक० | धूम० | तम |
|---|---|---|---|---|---|---|
| मुखानि | ४८ | ३५ | २४ | १५ | ८ | ३ |
| भूमयः | ३६ | २५ | १६ | ९ | ४ | १ |

सप्तमपृथिव्यां तु एकत्वात्प्रतरस्य मुखभूमिकल्पनाया अभाव इति ॥ ७१ ॥ इत्थं करणोपयोगिनीर्मुखभूमीः प्रतिपाद्य गाथासप्तकेन करणमाह—

मुहभूमिसमासद्धं, दिसाण विदिसाण होति रूवूणं।
सयपयरेहि गुणेयं(उं), सोहणयं सोहय इमं तु ॥ ७२ ॥

मुखभूमिसमासार्द्धं 'दिशां विदिशां' इति दिग्वर्तिनां विदिग्व-

र्तिना च नरकावासाना विधेयम्। पर दिग्वर्तिसमासाद्दोपेक्षया विदि-ग्नरकावासमासार्द्ध भवति रूपोनम्। तत किं कार्यम्? इत्याह—'स्वकमनेरं' त्रयोदशादिभिर्गुणयित्वा 'शोधनकं' शोधनीयराशिं प्रतरगुणनागतराशेर्मध्यात् 'शोध्य' अपनय 'इद तु' वक्ष्यमाण पुन ॥ ७७ ॥ यथा—

पुढवीपत्थडतुल्लं, सोहणय रयणमाइसु दिसासु।
बारस बारस नव छ च छ, च तियमेव विदिसासु ॥७३॥

'पृथ्वीप्रस्तटतुल्य' पृथिव्या पृथिव्या ये त्रयोदशैकादशादय प्रस्तटास्तत्प्रमाण 'शोधनक' शोधन भवतीति। कासु? इत्याह—'रयणमाइसु' त्ति रत्नप्रभादिषु पृथ्वीषु 'दिसु' दिग्वर्तिनरकावासविषये। तथा द्वादश द्वादश नव षट् च षट् च त्रय एव 'विदिसु' विदिग्वर्तिनरकावासविषये इति ॥७३॥ इदमेव शोधनक कथमुत्पद्यते? इत्याह—

सव्वेसि पत्थडाणं, एगदिसाए उ पयरमाणेणं।
एक्केक्कूणं ठाविय, तिभागसेसं तु सोहणयं ॥ ७४ ॥

'सर्वेषा प्रस्तटाना' त्रयोदशादीना सबन्धिनो नरकावासान् एकस्या दिशि 'तु' पुनरर्थे उपलक्षणत्वाद्विदिशि च वर्तमानान् 'प्रतरमानेन' प्रतरप्रमाणा वारा इत्यर्थ 'एकैकोनान्' एकैकेन परिहीणान् स्थापयेत्, ततस्त्रिभिर्विभजेत्, तत्र 'त्रिभागशेष तु' त्रिभागावशिष्ट पुन शोधनक जानीहीति शेष ॥ ७४ ॥ एव शोधनके द्विप्रकारे सिद्धे सति किं कार्यम्? इत्याह—

एय वाइमरासिओऽवणेउं सेस तिहा विभइऊणं।
निहि ठाणेहिं ठवेउ, सोहयगस्सावि हर भाग ॥ ७५ ॥

'एतत्' शोधनकं 'बाहाग्रात्' मुखभूमिसमासार्द्धस्य प्रतरगुणनेन लब्धनरकप्रमाणलक्षणात्मकाग्रात् 'अपनीय' त्यक्त्वा यच्छेषं तत्त्रिभिर्विभज्य यल्लब्धं तत्त्रिषु स्थानेषु स्थापयित्वा 'शोधनकस्यापि' द्विरूपस्य हर भागम् ॥ ७५ ॥ कैः ? इत्याह—

तिहि चेव सयाकालं, जं लद्धं तं तिहा उ काऊणं ।
दो भागा उ तंसे, पक्खेवो एग चउरंसे ॥ ७६ ॥

त्रिभिश्चैव 'सदाकालं' यदा यदा वृत्तादिसंख्याऽऽनेतुमिष्यते तदा तदेत्यर्थः । ततो यल्लब्धं तत् 'त्रिधा तु' त्रिधैव कृत्वा ततोऽपि 'द्वौ भागौ तु' त्रिभागलक्षणौ पुनः 'त्र्यस्रे' त्र्यस्रराशौ प्रक्षिप्यत इति प्रक्षेपः—न्यास्यो राशिर्विधेः, तथा एको भागश्चतुरस्रे प्रक्षेप इति ॥ ७६ ॥ आह यदा शोधनकं त्रिभिरपि विभक्तं न शुध्यति तदा का वार्ता ? इत्याह—

सोहणए दो उद्धरिया, तत्थेगो तंसि एग चउरंसे ।
एगुद्धरियं तंसे, एगा बाहा हवति एसा ॥ ७७ ॥

'शोधनके' उक्तलक्षणे यदा द्वावुद्धरितौ लभ्येते तदा 'तत्र' तयोर्मध्ये एकोऽङ्कः 'त्र्यस्रे' त्र्यस्रराशौ एकः 'चतुरस्रे' चतुरस्रराशौ प्रक्षिप्यते । अथ'एकं'एकरूपमङ्कस्थानमुद्धरितं वर्तते तदा तत्त्र्यस्रे प्रक्षेपणीयम् । एवं सति किं सिद्धम् ? इत्याह—एका दिग्गता विदिग्गता च 'बाहा' नरकावासश्रेणिलक्षणा 'भवति' संपद्यते 'एषा' पूर्वोक्ता ॥ ७७ ॥ ततोऽपि किं सपन्नम् ? इत्याह—

एयं एगदिसगं, चउसंगुणियं तु होइ सव्वगं ।
पुढवीए पुढवीए, वट्टा तंसा य चउरंसा ॥ ७८ ॥

'एतत्' पूर्वोक्तमनन्तरं 'एकदिशम्' पूर्वाद्येकदिग्गतनरकावासप्रमाणं भवति, उपलक्षणत्वाद्विदिशम च। 'चतुःसङ्गुणितं तु' चतुर्भिर्गुणितं पुनरेतदेव 'भवति' जायते 'सर्वाग्रं' सर्वदिग्विदिग्वर्तिनरकावासप्रमाणम्, क? इत्याह—'पृथिव्यां पृथिव्यां' रत्नप्रभादिषु षष्ठपृथ्वीपर्यन्तास्विति भावः। किमुक्तं भवति? इत्याह—वृत्तात्र्यस्रा चतुरस्रा विभक्तक्रमे त्र्यस्रचतुरस्राश्च नरकावासा भवन्ति ॥ ७८ ॥

अथास्या गाथायास्तत्त्वं भाव्यते—

यथा रत्नप्रभायां पूर्वस्यां दिश्येकोनपञ्चाशन्नरकावासा ध्रुवम्, सप्तत्रिंशद्भूमिः, ततो ध्रुवभूमिसमासार्धे जाता त्रिचत्वारिंशत् ४३। अस्यां त्रयोदशभिर्गुणितायां जातानि पञ्चशतान्येकोनषष्ठानि ५५९, एतदेव च माहात्म्यम्। अस्माच्च त्रयोदशप्रस्तटप्रमाणं शोधनकं शोधनीयम्। ननु केऽमी त्रयोदश ये शोध्यन्ते[1]? इत्युच्यते—सर्वप्रस्तटप्रमाणं रत्नप्रभायां त्रयोदश, तावतो वाराश्च प्रथमप्रस्तटप्रथमदिग्गतनरकावासप्रमाणमेकोनपञ्चाशत्संख्यमेव येकैकोनतया सत्वाप्यते यावत्सप्तत्रिंशत्, तत एतेषु राशिषु प्रत्येकं त्रिभिर्विभक्तेषु यथाक्रमं शुद्धशेषम्—१—०—२—१—०—२—१—०—२—१—०—२—१। एवं पञ्चानामेककानां चतुर्णां च द्विकानां मीलने जाते प्रथमपृथ्वीप्रस्तटतुल्यं शोधनकम्। तच्च माहात्म्याच्छोधिते ततो जातमिदं ५४६, अस्य च त्रिभिर्भागे लब्धं द्व्यशीतं शतम्, तच्च वृत्तत्र्यस्रचतुरस्रलक्षितेषु त्रिषु स्थानेषु स्थाप्यते, ततश्च शोधनकस्यापि त्रयोदशलक्षणस्य त्रिभिर्भागो

१ अत्र " रोवं " ( वि॰ ह॰ १-१-२६ ) इति सूत्रप्रवृत्तिः। अत्र+एकै०= अत्र शु+एकै०=अत्र क्षे०॥

दीयते, लब्धश्चतुष्कक एकश्चावशिष्टः, स च चतुष्ककस्त्रिषु स्थानेषु स्थाप्यते, तत्र च द्वौ चतुष्कौ त्र्यस्रेषु क्षिप्येते एकश्च चतुष्कश्चतुरस्रेषु, यश्चैकोऽवशिष्टः स त्र्यस्रेषु क्षिप्यते, ततो जातं रत्नप्रभायां पूर्वदिग्गतवृत्तादिराशित्रयम्, तच्चेदम्-१८२-१९१-१८६। यदा चतुर्दिगपेक्षया चिन्त्यते तदेतदेव राशित्रयं प्रत्येकं चतुर्भिर्गुण्यते, ततश्च वृत्तादीनां सर्वाग्रं भवति, तच्चाग्रे स्वयमेव शास्त्रकारः प्रतिपादयिष्यति। विदिक्षुः पुना रत्नप्रभाप्रथमप्रस्तटे ऐशान्यामष्टचत्वारिंशन्नरकावासाः, तेऽप्येकैकहान्या दिग्गतनरकावासक्रमेण स्थाप्यन्ते यावत् षट्त्रिंशत्, ततश्चैतेषु राशिषु प्रत्येकं त्रिभिर्भक्तेषु लब्धमवशिष्टं यथाक्रमम्— ०-२-१-०-२-१-०-२-१-०-२-१-० । एवं चतुर्णां द्विकानामेककानां च मीलने द्वादशरूपं शोधनकं भवति, शेषं सर्वं दिग्वद्बोद्धव्यम्। एवमन्यास्वपि पृथ्वीषु सर्वा करणभावना कार्येति॥

संप्रति प्राक्करणेन साधितान् वृत्तादिनरकावासान् प्रतिपृथिवि गाथाषट्केन कथयन्नाह—

अडवीसा चोसट्ठा, चोयाला सत्त सत्त य सया उ।
बारस चोयालाया, अडवीसहिया उ विदिसासु॥ ७९॥

अष्टाविंशानि चतुःषष्टानि चतुश्चत्वारिंशानि, कानि ? इत्याह— सत्त सत्त शतानि चशब्दतुशब्दौ पूरणार्थौ। इदमुक्तं भवति—रत्नप्रभायामष्टाविंशानि सप्त शतानि वृत्तानाम्, चतुःषष्टानि सप्त शतानि त्र्यस्राणाम्, चतुश्चत्वारिंशानि सप्तैव शतानि चतुरस्राणां नरकावासानां दिक्षु सर्वाग्रं भवतीति। तथा 'बारस चोयालाया अडवीसहिय' त्ति द्वादशभिश्चतुश्चत्वारिंशताऽष्टाविंशत्या चाधिकानि सप्त सप्त शतानीति संबध्यते,

'हु' पूर्ववत् । इदमत्र हृदयम्—द्वात्रिंशदधिकानि चतुश्चत्वारिंशदधिकान्यष्टाविंशत्यधिकानि च सप्त शतानि यथाक्रमं पूर्वस्यामचतुरस्रप्रमाण भवति 'विदिसु' विदिग्विषये । एवं सर्वत्र । अङ्कतोऽपि दिक्षु पू० ७२८, प्र० ७६४, च० ७४४ । विदिक्षु पू० ७१२, प्र० ७४४, च० ७२८ ॥७९॥ एतद्रत्नप्रभायाम् । शर्कराप्रभायां पुनः—

चत्ता य अट्ठसट्ठा, छप्पन्नहिया य चउ चउ सया उ ।
चउवीसा छप्पन्ना, चत्तालहिया य विदिसासु ॥ ८० ॥

चत्वारिंशानि 'च' पूर्ववत्, अष्टषष्ठानि षट्पञ्चाशदधिकानि च चत्वारि [चत्वारि] शतानि 'तु' पूर्ववत्, दिक्षु ४४०–४६८–४५६ । तथा चतुर्विंशानि षट्पञ्चाशानि चत्वारिंशदधिकानि च चत्वारि चत्वारि शतानीति लभ्यते विदिक्ष्विति, ४२४–४५६–४४० ॥८०॥ अथ तृतीयायाम्—

चत्ता चउसट्ठा या, बावन्ना दोसिय दोसिय उ सया उ ।
अडवीसा बावन्ना, चत्ताहिया चेव विदिसासु ॥ ८१ ॥

चत्वारिंशे चतुःषष्टे चकारो भिन्नक्रमे ततो द्वापञ्चाशे च 'द्वे द्वे तु शते तु' द्वे द्वे एव शते पुनर्भवतो दिक्षु, २४०–२६४–२५२ । तथाष्टाविंशे द्वापञ्चाशे चत्वारिंशदधिके चैव द्वे द्वे शते इति योज्यते, २२८–२५२–२४० विदिक्ष्विति ॥ ८१ ॥

बारहिय चउवीस, वीसहियं सह सयं चउत्थीए ।
चउरहिय वीसहियं, बारहियं चेव विदिसासु ॥ ८२ ॥

द्वादशाधिकं द्वात्रिंशं विंशत्यधिकं तथेति समुच्चये, शतमिति सर्वत्र संबध्यते, चतुर्थ्यां नरकपृथिव्यां ११२–१३२–१२० दिक्षु । तथा

नर्थपदं पृच्छति। मध्यमा तूभयथाप्यागच्छति, अल्पतरगौरवविषयत्वात्। अभ्यन्तरया वाऽऽदिष्टमर्थपदं तया सह प्रवन्नाति ग्रन्थिबन्धं करोतीति। बाह्या बाह्यत्वेनानाकारितैवागच्छति, अल्पतमगौरवविषयत्वात्, तस्याश्चार्थपदं वर्णयत्येवेति(—पदमेव वर्णयतीति)। चकारो भिन्नक्रमे, तत आत्मरक्षकाश्च, सन्नद्धबद्धकवचाः उत्पीडितशरासनपट्टिकाः गृहीतविविधप्रहरणाः सौधर्मसभायामास्थानगतं स्वप्रभुं परिक्षिप्य बद्धपाल्यो ये वर्तन्ते। 'अनीकानि' हस्त्यश्वरथपदातिवृषभगन्धर्वनाट्यलक्षणानि सप्त। तत्राद्यानि पञ्च संग्रामोपयोगीनि, द्वे तु भोगफले इति। 'तथा' इति समुच्चये। याश्च 'अग्रमहिष्यः' पट्टराज्ञीसदृक्षास्त्रिदशपतिपत्न्यः ताः सौधर्मे ईशाने कल्पविमानेषु बोद्धव्या इति ॥ २७४ ॥ एतदेव सविशेषं भावयितुमाह—

परिसाईया सव्वे, सोहम्मे जे य होंति ईसाणे।
पत्तेयविमाणेसुं, वसंति न उ सक्कतणएसु ॥ २७५ ॥

'परिषदादयश्च' देवविशेषा अनन्तरमेव निरूपिताः सर्वे सौधर्मे ये च भवन्ति ईशाने, ते किम्? इत्याह—'प्रत्येकविमानेषु' पृथक्पृथगवस्थितलक्षणेषु वसन्ति, 'न तु' न पुनः 'सक्कतणएसु' त्ति शक्रसत्कनिलयेषु, सेवावसरागतानामेव पञ्चस्वपि शक्रविमानेषु परिषदादीनामवस्थानसंभवादिति ॥ २७५ ॥ उपरितनदेवलोकेषु परिषदादिदेवनिवासनिरूपणायाह—

कप्पविमाणेसु भवे, परिसाओ आयरक्खऽणीया य।
एगविमाणे सामाणिया य तह लोगपाला य ॥ २७६ ॥

'कल्पविमानेषु' उक्तलक्षणेषु 'भवेयुः' निवसेयुः, के? इत्याह—

तत्र रत्नप्रभायां सप्तनवतिर्भवति मुखम्, एकपञ्चाशतो द्विसप्तसन्धिनामष्टचत्वारिंशतश्च विदिक्सत्कन्धिना नरकावासानां समासे एतत्सङ्ख्यामभवत्। सप्ततिर्द्विभिरधिका भवेद्भूमि, इयमपि सप्तत्रिंशतो दिग्वर्तिना षट्त्रिंशतश्च विदिग्वर्तिना मीलने सम्पन्ने। एवं शेषपृथ्वीष्वपि मुखभूमिप्रमाणभावना कार्या। तथैकसप्ततिर्भवति मुखम्, भूमिरेकपञ्चाशद्द्वितीयायामिति ॥ ८५ ॥ एकोनपञ्चाशत् त्रयस्त्रिंशत्, किम्? इत्याह—यथाक्रमं मुख भूमी च भवतस्तृतीयायां पृथिव्याम्। तथैकोनत्रिंशदेकोनविंशतिर्यथाक्रमं मुखभूम्यौ भवतश्चतुर्थ्यां पृथिव्यामिति ॥ ८६ ॥ पञ्चमपृथिव्यां विभक्तिलोपश्च प्राकृतत्वात्, सप्तदश नव मुखभूमी भवतः। तथा सप्त त्रिकं च मुखभूमी भवतः षष्ठपृथिव्याम्। तथा 'पणुवीस' त्ति पञ्चविंशति 'तिवीस' त्ति त्रयोविंशति 'अट्ठार' त्ति अष्टादश 'तेर' त्ति त्रयोदश एकादश षट् च 'सोहणं' शोधनकं भवति यथाक्रमं रत्नप्रभादिपृथ्वीषु प्रतिपृथिवि त्रयोदशाष्टादशादिदिग्वर्तिशोधनक मीलने एतत्सम्पद्यशोधनकमभवदिति ॥ ८७ ॥ स्थापना—इत्थमुपायमुक्त्वा करणमाह—

| [illegible] | रत्न० | शर्क० | वालु० | पंक० | धूम० | तम० |
|---|---|---|---|---|---|---|
| मुखानि। | ९७ | ७१ | ४९ | २९ | १७ | ७ |
| भूमयः। | ७२ | ५१ | ३३ | १९ | ९ | ३ |
| शोधनका० | २५ | २३ | १८ | १३ | ११ | ६ |

मुहभूमिसमासद्धं, पयरगुणं सोहणूणं तिहिं भइयं।
सोहणयजुयं चउराहयं च वट्टाइं रयणाए ॥ ८८ ॥

मुखभूम्यो—प्रागुद्दिष्टस्वरूपयोः समासार्द्धं प्रतीतमेव 'पयरगुण' प्रतिपृथिवि स्वप्रतरप्रमाणगुणितं 'सोहणऊणं' शोधनकपरिहीनं पुन-

त्रिभिः 'भक्तं' अपहृतं शोधनकयुतं 'चतुराहृतं च' चतुर्भिर्गुणितं पुनः 'वृत्तादि' वृतत्र्यस्रचतुरस्रनरकावासप्रमाणं स्यात् 'रत्नायां' रत्नप्रभायामिति ॥ ८८ ॥ एवमपि कृते यथा वृत्तनरकावासप्रमाणं परिपूर्णं संपद्यते तथाऽभिधानः सर्वपृथ्वीष्वप्ययमेव क्रम इति प्रतिपादयन्नाह—

दिसि विदिसाण समासे, मज्झिमनरइंदएहि सव्वग्गं ।
पुढवीए पुढवीए, वट्टा तंसा य चउरंसा ॥ ८९ ॥

दिशां विदिशां च संबन्धिनो ये वृत्तादयो नरकावासास्तेषां समासे पूर्वोक्तक्रमेण कृते सति मध्यमनरकेन्द्रकैः सह सर्वाग्रं वृत्तनरकावासानां भवति । यथा रत्नप्रभायां तथा 'पृथ्व्यां पृथ्व्यां' शर्कराप्रभादिकायां वृत्तास्त्र्यस्राश्चकारो भिन्नक्रमे ततश्चतुरस्राश्च नरकावासा भवन्ति ॥ ८९ ॥ अयमस्य गाथाद्वयस्य भावार्थः—

यथा रत्नप्रभायां सप्तनवतिर्मुखं ९७ त्रिसप्ततिर्भूमिः ७३, ततो मुखभूमिसमासार्द्धे जाता पञ्चाशीतिः ८५, अस्यां च त्रयोदशलक्षणाचलच्चकगुणितायां जातान्येकादशशतानि पञ्चाधिकानि ११०५, एतेभ्यश्च शोधनके पञ्चविंशतिलक्षणे शोधिते जातं १०८०, अस्य च त्रिभिर्भागे लब्धानि त्रीणि शतानि षष्ट्यधिकानि ३६०, एतच्च वृत्तत्र्यस्रचतुरस्रसंज्ञितेषु त्रिषु स्थानेषु स्थाप्यते, ततश्च शोधनकस्यापि पञ्चविंशतिलक्षणस्य त्रिभिर्भागो दीयते, लब्धोऽष्टक एकश्चात्रावशिष्टः, स चाष्टकस्त्रिषु स्थानेषु स्थाप्यते, तत्र च द्वावष्टकौ त्र्यस्रेषु क्षिप्येते, एकश्च चतुरस्रेषु, यश्चैकोऽवशिष्टः सोऽपि त्र्यस्रेषु क्षिप्यते, ततो राशित्रयं चतुष्ककेण गुण्यते, पश्चात्प्रथमराशौ त्रयोदशेन्द्रकाः

क्षिप्यन्ते, ततो जात रत्नप्रभायां दिग्विदिक्ष्वपि वृत्तादिनरकत्रयम्, तच्चेदम्—वृ० १४५३, त्र्य० १५०८, च० १४७२। एवं शेषा- स्वपि पृथिवीषु स्वकीयमुखभूमिकोन्नयनान्यपेक्ष्य भावना कार्येति ॥ ७ ॥

इदानीं "मुहभूमिसमासद्ध" ( गा० ८८ ) इत्यनेन करणेन दिग्विदिशां यौगपद्येन वृत्तादिनरकावासप्रमाणं यदागतं तद्रत्नप्रभादि- पृथ्वीषु पृथक्पृथक्प्रदर्शयन् गाथाद्वयमाह—

चोद्दस सय तेवन्ना, पनरस सया य अडहिया य।
चोद्दस सय बावत्तर, वट्टाई हुंति रयणाए ॥ ९० ॥

चतुर्दश शतानि त्रिपञ्चाशानि, पञ्चदश शतानि 'य' पुनरर्थे, अष्टभिरधिकानि, मकारोऽलाक्षणिकः, 'य' पूरणार्थे, चतुर्दश शतानि द्वासप्ततानि, किम्? इत्याह—'वृत्तादयः' यथाक्रमं वृत्त १४५३– त्र्यस्र १५०८ चतुरस्रा १४७२ नरकावासा भवन्ति 'रत्नायां' रत्नप्रभायामिति ॥ ९० ॥

अड सय पणहत्तर, नव चेव सया य हुंति चउवीसा।
छन्नउया अड सया, वट्टाई हुंति बीयाए ॥ ९१ ॥

अष्ट शतानि पञ्चसप्ततानि, नव चैव शतानि 'य' पुनरर्थे भवन्ति चतुर्विंशानि, षण्णवत्यधिकान्यष्टौ शतानि, किम्? इत्याह— 'वृत्तादयः' वृत्त ८७५ त्र्यस्र ९२४ चतुरस्रा ८९६ भवन्ति द्वितीयायां पृथिव्यामिति ॥ ९१ ॥

चउ सय सत्तत्तर पण सोल चउरो सया उ बाणउया।
पुढवीए तइयाए, वट्टा तंसा य चउरंसा ॥ ९२ ॥

चत्वारि शतानि सप्तसप्ततानि, पञ्चशतानि षोडशानि, चत्वारि

शतानि 'तुः' पुनरर्थः द्वानवतानि पृथिव्यां तृतीयायाम्, किम्? इत्याह—वृत्ताः ४७७ त्र्यस्राः ६१६ 'चः' समुच्चये चतुरस्राश्च ४९२ नरकावासा भवन्तीति ॥ ९२ ॥

तेवीसा बावण्णा, वत्तीसा दोण्णि दोण्णि य सया उ।
पुढवीइ चउत्थीए, वट्टादी होंति णायव्वा ॥ ९३ ॥

त्रयोविंशे द्वापञ्चाशे द्वात्रिंशे 'दोण्णि दोण्णि य' त्ति द्वे द्वे च शते 'तुः' पूर्ववत् पृथिव्यां चतुर्थ्याम्, किम्? इत्याह—'वृत्तादयः' वृत्त २२३ त्र्यस्र २९२ चतुरस्राः २३२ नरकावासा भवन्ति ज्ञातव्या इति ॥ ९३ ॥ ॥

सत्तत्तरी सयं चेव तह य णिरयाण अट्ठसीती य।
पुढवीए पंचमीए, वट्टादी होंति णायव्वा ॥ ९४ ॥

सप्तसप्ततिः शतं चेव 'तथा च' इति पूरणे निरयाणामष्टाशीतिश्च पृथिव्यां पञ्चम्यां 'वृत्तादयः' वृत्त ७७ त्र्यस्र १०० चतुरस्राः ८८ भवन्ति ज्ञातव्याः ॥ ९४ ॥

पण्णरस अट्ठवीसा, वीसा वट्टादि छट्ठपुढवीए।
एगो वट्टो तंसा, चउरो खलु सत्तमीए उ ॥ ९५ ॥

पञ्चदश अष्टाविंशतिर्विंशतिः 'वृत्तादयः' वृत्त १५ त्र्यस्र २८—चतुरस्राः २० षष्ठपृथिव्यां भवन्ति। तथा एकः 'वृत्तः' इन्द्रकरूपः १ त्र्यस्राश्चत्वारः ४ 'खलुः' वाक्यालङ्कारे सप्तम्यां तु पृथिव्यामिति ॥९५॥ इत्थं प्रत्येकं रत्नप्रभादिषु वृत्तादिपरिमाणं प्रतिपाद्य सप्तस्वपि यौगपद्येन तत्प्रतिपादयितुमुपायमाह—

मुहभूमीओ सव्वा, दिसिविदिसा सव्वमेलियाणुद ।
चउप्पयडपालगुणा, दिसिविदिसा चेव सव्वग्गं ॥ ९६ ॥

इह दिशां विदिशां च प्रस्तटप्रस्तटवृत्तादिपरिमाणमानेतुमिष्टमास्ते, ततो मुखभूमय 'सर्वा' समस्ता । सामस्त्यमेव भावयति—'दिसिविदिस' त्ति दिशो विदिशश्च सम्बन्धिन्य एकैकपङ्क्तावेकैकप्रस्तटत्वादित्येकैकलक्षणा स्वयमेव ज्ञातव्या । ततः किम् ? इत्याह—'सर्वमीलितानां' सर्वासां मुखभूमीनां संमिलितानां यदर्धम्, तत्किम् ? इत्याह—एकोनपञ्चाशत्प्रस्तटचतुर्गुणं क्रियते ततो यथाक्रमं दिशां विदिशां चैव 'सर्वाग्रं' सर्ववृत्तादिनरकावासप्रमाणं भवति । शेषं शोधनकापनयनादि पूर्ववत् । यथा चैतत्समागच्छति तथोपरिष्टात्सविशेषं वक्ष्याम इति ॥ ९६ ॥ तदेवमेव प्रमाणतो गाथाद्वयेन प्रतिपादयन्नाह—

पण्णरस अट्ठसट्ठा, सया उ तह चेव सत्तरस सयाइं ।
सोलस बत्तीसाइं, दिसासु वट्टाइसव्वग्गं ॥ ९७ ॥
पण्णरस सया चउरासिया उ सोलस सया उ बत्तीसा ।
पण्णरसट्ठट्ठी वि य, वट्टाई विदिसि सव्वग्गं ॥ ९८ ॥

पञ्चदशाष्टषष्टानि शतानि 'तु' पुनरर्थे, 'तथा चैव' इति समुच्चये, सप्तदश शतानि शुद्धान्येव, षोडश द्वात्रिंशानि शतानीत्यनुवर्तते, किम् ? इत्याह—'दिशां' चतसृणामपि सम्बन्धि 'वृत्तादिसर्वाग्रं' वृत्त १५६८ त्र्यस्र १७०० चतुरस्र १६३२ नरकावासप्रमाणं भवतीति ॥ ९७ ॥

पञ्चदश शतानि चतुरशीत्यधिकानि तु षोडश शतानि तु द्वात्रिंशानि तुशब्दौ पूर्ववत्, पञ्चदश शतानि 'अष्टषष्टिरपि' अष्टषष्ट्यधिका-

नीत्यर्थः, किम्? इत्याह—विभक्तिव्यत्ययात् 'वृत्तादीनां' वृत्त १५०४–त्र्यस्र १६३२ चतुरस्राणां १५६८ विदिक्षु सर्वाग्रं भवति ॥ ९८ ॥ गाथात्रयस्यापि भावना—

रत्नप्रभाप्रथमप्रस्तटैकदिग्गतनरकावासप्रमाणं [मुखम् ४९, तमस्तमापृथिव्येकदिग्गतनरकावासः] पुनर्भूमिस्तच्चेदम्—१, अनयोः समासः ५०, तदर्द्धं च २५ एकोनपञ्चाशल्लक्षणावलम्बकगुणितं जातमिदं १२२५, अस्माच्छोधके एकोनपञ्चाशल्लक्षणे पातिते शेषराशौ त्रिभिर्विभक्ते लब्धमिदं ३९२, पुनरस्मिन्नेव राशौ त्रिषु स्थानेषु वृत्तत्र्यस्रचतुरस्रसंज्ञितेषु स्थापिते शोधनकमपि त्रिभिर्विभज्यते, लब्धः षोडशक एक एकश्चावशिष्टः, स च षोडशकः त्रिषु स्थानेषु स्थाप्यते, तत्र द्वौ षोडशकावेककश्च त्र्यस्रराशौ क्षिप्यन्ते, एकश्च षोडशकश्चतुरस्रराशौ निक्षिप्यते, ततस्त्रिष्वपि राशिषु दिक्चतुष्टयगुणनाल्लभ्यते यथानिर्दिष्टं वृत्तादिपरिमाणमिति। विदिक्षु पुनरष्टचत्वारिंशन्मुखम्, षष्ठपृथ्वीचरमप्रस्तटविदिग्नरकावासो भूमिः स चैकः, अनयोः समास एकोनपञ्चाशत्, ततोऽर्द्धदानाभावादवलम्बकराशिरष्टचत्वारिंशल्लक्षणोऽर्द्धीक्रियते जाता चतुर्विंशतिः, ततोऽनयो राश्योः परस्परगुणने जातमेकादश शतानि षट्सप्तत्यधिकानि, अङ्कतोऽपि ११७६, ततोऽस्मादष्टचत्वारिंशल्लक्षणे शोधनके शोधिते त्रिभिश्च भागे पातिते लब्धं ३७६, एतच्च वृत्तत्र्यस्रचतुरस्रलक्षणेषु त्रिषु स्थानेषु स्थाप्यते, शोधनकराशिरपि त्रिभिर्विभज्यते लब्धः षोडशकः, स च त्रिषु स्थानेषु स्थाप्यते, ततो द्वौ षोडशकौ त्र्यस्रस्थाने क्षिप्येते, एकश्च षोडशकश्चतुरस्रस्थान इति, ततस्त्रिष्वपि राशिषु विदिक्चतुष्टयगुणने वृत्तादिपरिमाणमुक्तलक्षणं लभ्यत

मर्थपदं प्रच्छति। मध्यमा तूभयथाप्यागच्छति, अल्पतरगौरवविषयत्वात् । अभ्यन्तरया वाऽऽदिष्टमर्थपदं तया सह प्रबध्नाति ग्रन्थिबन्धं करोतीति । बाह्या बाह्यत्वेनानाकारितैवागच्छति, अल्पतमगौरवविषयत्वात्, तस्याश्चार्थपदं वर्णयत्येवेति(-पदमेव वर्णयतीति) । चकारो भिन्नक्रमे, तत आत्मरक्षकाश्च, सन्नद्धबद्धकवचाः उत्पीडितशरासनपट्टिकाः गृहीतविविधप्रहरणाः सौधर्मसभायामास्थानगतं स्वप्रभुं परिक्षिप्य बद्धपाल्यो ये वर्तन्ते । ' अनीकानि ' हस्त्यश्वरथपदातिवृषभगन्धर्वनाट्यलक्षणानि सप्त । तत्राद्यानि पञ्च संग्रामोपयोगीनि, द्वे तु भोगफले इति । 'तथा' इति समुच्चये । याश्च ' अग्रमहिष्यः ' पट्टराज्ञ्यस्त्रिदशपतिपत्न्यः ताः सौधर्मे ईशाने कल्पविमानेषु बोद्धव्या इति ॥ २७४ ॥ एतदेव सविशेषं भावयितुमाह—

परिसाईया सव्वे, सोहम्मे जे य होंति ईसाणे ।
पत्तेयविमाणेसुं, वसंति न उ सक्कतणएसु ॥ २७५ ॥

' परिषदादयश्च ' देवविशेषा अनन्तरमेव निरूपिताः सर्वे सौधर्मे ये च भवन्ति ईशाने, ते किम् ? इत्याह—'प्रत्येकविमानेषु' पृथक्पृथगवस्थितलक्षणेषु वसन्ति, ' न तु ' न पुनः ' सक्कतणएसु ' त्ति शक्रसत्कनिलयेषु, सेवावसरागतानामेव परमपि शक्रविमानेषु परिषदादीनामवस्थानसंभवादिति ॥ २७५ ॥ उपरितनदेवलोकेषु परिषदादिदेवनिवासनिरूपणायाह— .

कप्पविमाणेसु भवे, परिसाओ आयरक्खऽणीया य ।
एगविमाणे सामाणिया य तह लोगपाला य ॥ २७६ ॥

' कल्पविमानेषु ' उक्तलक्षणेषु 'भवेयुः' निवसेयुः, के ? इत्याह—

इगतीसा इगवीसा, तेत्तीस सया य होंति बत्तीसा ।
बत्तीसं चेव सया, सत्तसु वट्टाइसव्वग्गं ॥ १०१ ॥

एकत्रिंशच्छतान्येकविंशानि त्रयस्त्रिंशच्छतानि च भवन्ति द्वात्रिंशानि द्वात्रिंशच्चैव शतानि शुद्धानि सप्तसु नरकपृथ्वीषु 'वृत्तादिसर्वाग्रं' यथासंख्यं वृत्तत्र्यस्रचतुरस्रप्रमाणं भवतीति, अङ्कतोऽपि ३१२१–३३३२–३२०० । यदा पुनरेतदेव राशित्रयं मील्यते तदाऽऽवलिकागतनरकावासप्रमाणं त्रिपञ्चाशदधिकषण्णवतिशतरूपं ९६५३ संपद्यत इति ॥ १०१ ॥

इत्थमावलिकाप्रविष्टांस्तदितरानुभयरूपानावलिकाप्रविष्टेष्वपि वृत्तत्र्यस्रचतुरस्रान्प्रतिपृथिवि समुदायेन च नरकावासान्प्रतिपाद्य संप्रति पृथिवीनामेव बाहल्यप्रमाणं प्रतिपादयन्नाह—

पढमासीतिसहस्सा बत्तीसा अट्ठवीस वीसा य ।
अट्ठार सोलसट्ठ य, सहस्स लक्खोवरिं कुज्जा ॥ १०२ ॥

विभक्तिव्यत्ययात् 'प्रथमायां' रत्नप्रभाभिधानायां अशीतिसहस्राणि "लक्षोपरि कुर्यात्" इत्युत्तरेण योगः, अशीतिसहस्राधिकं लक्षं बाहल्यमस्या इति गर्भः । तदनु क्रमेण द्वितीयादिषु पृथ्वीषु द्वात्रिंशतं अष्टाविंशतिं विंशतिं च अष्टादश षोडश अष्टौ च सहस्राणि लक्षोपरि कुर्यात्, एवं च कृते आसामेतदेव बाहल्यप्रमाणं भवतीति । अङ्कतोऽपि प्रथमायां १८००००, द्वितीयायां १३२०००, तृतीयायां १२८०००, चतुर्थ्यां १२००००, पञ्चम्यां ११८०००, षष्ठ्यां ११६०००, सप्तम्यां १०८००० ॥ १०२ ॥ अथ सर्वपृथ्वीषु प्रस्तटान्तरप्रमाणानयनायोपायमाह—

तिसहस्सूणा पुढवी, सगपयरेहिं तिसहस्सगुणिएहिं ।
ऊणा रूवूणियपयरभाइया पत्थडंतरयं ॥ १०३ ॥

द्वाभ्यां सहस्राभ्यां बाहल्यमपेक्ष्येति गम्यते, ऊना 'पृथ्वी' रत्नप्रभादिका कृता सती 'स्वकप्रतरैः' निजप्रस्तटैः, कीदृशैः ? इत्याह— त्रिसहस्रगुणैरूना, तथा रूपोनितप्रतरभाजिता, किम् ? इत्याह— 'प्रस्तटान्तरकं' प्रस्तटात्प्रस्तटस्यान्तरालं भवति । यथा—रत्नप्रभाया लक्षमशीतिसहस्राधिकं बाहल्यम्, तथाधस्तनेनोपरितनेन च सहस्रेणोनं कृतं जातमष्टसप्ततिसहस्राधिकं लक्षम्, ततस्तु त्रयोदशसु स्वप्रस्तटेषु त्रिसहस्रगुणितेष्वपनीतेषु योऽवशिष्टो राशिस्तस्य स्वप्रस्तटप्रमाणेन रूपोनेन भागे हृते लब्धं योजनानामेकादश सहस्राणि पञ्चशतानि त्र्यशीतानि, अङ्कतोऽपि ११५८३, अवशिष्टमिदं— ४/१२ उभयस्यापि चतुर्भिरपवर्तने लब्धो योजनत्रिभागः, स चायं १/३ । एवमन्यास्वपि प्रस्तटान्तराण्यानेतव्यानीति ॥ १०३ ॥ यदभिप्रायेण स्वप्रतरैस्त्रिसहस्रगुणितैरित्युक्तं तदभिप्रायप्रकाशनायाह—

हेट्ठा घणा सहस्सं, उप्पिं सङ्कुय सहस्समेगं तु ।
मज्झे सुसिरं सहस्सं, तिन्नि य सहस्सूसिया नरया ॥१०४॥

'अधस्तात्' तलभागे 'घना' निश्छिद्राः सहस्रं यावद्योजनानां सर्वेऽपि नरकावासाः । 'उप्पिं'ति उपरि सङ्कुचन्तीति सङ्कुचाः सङ्कुचिता इत्यर्थः सहस्रं 'एकं' एकमेव । तथा 'मध्ये' मध्यभागे 'शुषिरा' रन्ध्रभाजः सहस्रम् । एवं 'त्रीणि सहस्राणि उच्छ्रिताः' प्रत्येकं त्रिसहस्रबाहल्या इत्यर्थः 'नरका' इति नरकावासप्रस्तटा इति ॥१०४॥ संप्रति प्रतिपृथिवि प्रस्तटान्तरं तु सूत्रकारः साक्षादेव दर्शयन् गाथापञ्चकमाह—

छसु चेव हवति अतरं-एय चिय सत्तमाए हेट्ठुवरिं ।
निरयरहियं मुणेज्जा, सेसेसु निरंतरा निरया ॥ १०९ ॥

'षट्स्वेव' पृथिवीषु भवति अन्तरं प्रस्तटप्रस्तटस्य, यत एक एव प्रस्तटः सप्तम्यां वर्तते । ततोऽन्तरप्रमाणमाह—'एय चिय' त्ति एतदेव पूर्वोक्तं प्रमाणं सार्द्धद्विपञ्चाशत्सहस्रस्वरूपं 'सप्तम्यां' महातमःप्रभायां 'हेट्ठुवरिं' ति अधस्तादुपरि च, किम् ? इत्याह—'निरयरहियं' ति त्रिसहस्ररूपनरकावासरहितं जानीत । इदमत्र तात्पर्यम्—षट्स्वेव पृथिवीष्वनेकप्रस्तटसद्भावादन्तरालं भवति । सप्तम्यां त्वेक एव, ततश्च तत्प्रमाणमष्टसहस्राधिकलक्षस्वरूपं सहस्रत्रयरूप-प्रस्तटप्रमाणरहितं द्विधाकृत्य तदधस्तादुपरि च सार्द्धद्विपञ्चाशत्सहस्र-लक्षणं क्षेत्रं नरकरहितं बोद्धव्यम्, अङ्कतोऽपि ५२५०० । अन्तरा-लविरहिते स्थाने का वार्ता ? इत्याह—'शेषेषु' अन्तरालविरहितेषु निरयक्षेत्रविभागेषु निरन्तरा निरया भवन्तीति ॥ १०९ ॥ सम्प्रति सीमन्तकप्रस्तटादप्रतिष्ठानप्रस्तटं यावदेकस्यां दिशि विदिशि च विवक्षितश्रेणौ वृत्तादयो ये नरकावासास्तानुपदिदर्शयिषुरिदमाह—

एगदिसि जं सेढिं, इच्छसि जे तत्थ होंति निरया उ ।
तिगभइयसुद्धवट्टा, इग तंसे दो य चउरंसे ॥ ११० ॥

'एकदिशि' पूर्वादिकायां उपलक्षणत्वाद्विदिशि वाग्नेय्यादिकायां या श्रेणिर्व्यवस्थिता विभक्तिव्यत्ययश्च प्राकृतत्वात्, 'इच्छसि' अभिलषसि 'जे' इति यावन्त 'तत्र' श्रेणौ भवन्ति नरकावासास्तान् ज्ञातुं 'तु' पुनरर्थे, तत्र किम् ? इत्याह—'त्रिकभक्तशुद्धवृत्ता' त्रिकभक्तायां श्रेणौ शुद्धा—त्रिभागलब्धा वृत्ता भवन्ति, न कश्चित्तत्र

प्रक्षेपः कार्य इति भावः। यदि पुनस्त्रिभिर्भागे पातिते एकोऽवशिष्यते तदा स एकः 'अंसे' त्र्यस्रराशावेव क्षिप्यते 'दो य चउरंसे' त्ति यदा द्वावशिष्टौ भवतस्तदैकश्चतुरस्रे चकारात् त्र्यस्रे चैकः क्षिप्यत इति। इदमुक्तं भवति—यदा सीमन्तकादौ कश्चित्प्रस्तट एकस्यां दिशि विदिशि वा वृत्तादिनरकावासप्रमाणं ज्ञातुमिच्छति तदा या काचिदेकोनपञ्चाशदादिकाऽष्टचत्वारिंशदादिका वा श्रेणिरुपलभ्यते तस्यां त्रिभिर्विभक्तायां लब्धं वृत्तत्र्यस्रचतुरस्रलक्षणेषु त्रिषु स्थानेषु स्थाप्यते, यदि च विभक्तशेष एको भवति तदा त्र्यस्रराशौ क्षिप्यते, द्वौ पुनर्विभक्तशेषौ यदा भवतस्तदैकस्त्र्यस्रे एकश्चतुरस्रे निक्षिप्यते, ततो वृत्तादिप्रमाणं स्फुटं भवतीति ॥ ११० ॥ एवं सप्तस्वपि पृथ्वीषु नरकावासस्वरूपं सप्रपञ्चं प्रतिपाद्य सांप्रतं तास्वेव सामान्येन प्रतिप्रस्तटं विशेषेण चायुरुत्कृष्टतो जघन्यतश्च प्रतिपादयितुमिच्छुर्गाथाषोडशकमाह—

एगं ति सत्त दस सत्तरेव बावीस तह य तेत्तीसा।
रयणाइसु पुढवीसु, उक्कोस ठिती उ अयराणि ॥ १११ ॥

एकं त्रीणि सप्त दश सप्तदशैव द्वाविंशतिः तथा च त्रयस्त्रिंशत्. अतराणीत्युत्तरेण संबन्धः, किम्? इत्याह—'रत्नादिषु' रत्नप्रभादिषु पृथ्वीषु 'उत्कृष्टा स्थितिः' उत्कर्षप्राप्तमवस्थानं 'तुः' पूरणार्थः 'अतराणि' सागरोपमानीति॥१११॥ अथ जघन्या स्थितिरुच्यते—

दसवाससहस्साइं, एग ति सत्त दस तह य सत्तरस।
बावीसा अयराइं, रयणाईणं जहण्णेणं ॥ ११२ ॥

दशवर्षसहस्राणि एकं त्रीणि सप्त दश तथा च सप्तदश द्वाविंशतिः 'अतराणि' सागरोपमानि, किम्? इत्याह—'रत्नादीनां' रत्नप्रभा-

दीनां पृथ्वीनां "ताभ्यामायत्रयोदश" इति वचनात् नारकाणां 'जघन्येन' जघन्यपदापेक्षया स्थितिरिति ॥ ११२ ॥ एतामेव प्रतिप्रस्तटं विभज्य दर्शयन्नाह—

दस नउइ च सहस्सा, पढमे पयरम्मि ठिति जहन्नियरा।
सा सयगुणिया बीए, तइयम्मि पुणो इमा होइ ॥ ११३ ॥
नउई लक्ख जहन्ना, उक्कोसा पुव्वकोडि निद्दिट्ठा।
आईए पुव्वकोडी, दसभागो सागरस्सियरा ॥ ११४ ॥
दसभागो पढमए, दो दसभागा य होंति उक्कोसा।
एगुत्तरवुड्ढीए, दसेव भागा भवे जाव ॥ ११५ ॥

सहस्रशब्दस्य प्रत्येकमभिसम्बन्धात् दस सहस्राणि नवतिश्च सहस्राणि 'प्रथमे प्रतरे' सीमन्तकनाम्नि 'स्थितिः' अवस्थानकालो नरकाणां जघन्येतरा च क्रमेण भवति, जघन्या १०००० उत्कृष्टा ९०००० । 'सा' जघन्येतरा च स्थितिः 'शतगुणिता' शताभ्यस्ता सती 'द्वितीये' द्वितीयप्रस्तटे जघन्येतररूपा जायते, सा चेयम्—जघन्या १०००००० उत्कृष्टा ९०००००० । तृतीये प्रस्तटे पुनः 'इयं' वक्ष्यमाणा भवतीति ॥११३॥ नवतिर्लक्षाणि जघन्या उत्कृष्टा पूर्वकोटिर्निर्दिष्टा तीर्थकरगणधरादिभिः । चतुर्थप्रतरे पुनः 'आदौ' जघन्यपदे स्थितिः पूर्वकोटिः, 'दशभाग' दशमोंऽशः सागरस्य 'इतरा' उत्कृष्टा स्थितिर्भवतीति ॥ ११४ ॥ 'दशभाग' उक्तरूपः पञ्चमके प्रस्तटे जघन्या स्थितिः, द्वौ दशभागौ च भवत उत्कृष्टा स्थितिः । एवमेकोत्तरवृद्ध्या तावन्नेय दशैव भागा भवेयुर्यावत् । क्वचित् "दस दस-भागा" इति पाठः, तत्र दशविभागैः सपिण्डितस्य सागरोपमस्य

दशभागाः, दश दशभागाः सागरोपममेवेत्यर्थः । इदमस्य गाथाद्वन्द्वस्य तात्पर्यम्—षष्ठप्रस्तटे द्वौ दशभागौ सागरोपमस्य जघन्या, त्रयश्चोत्कृष्टा। सप्तमप्रस्तटे त्रयः सागरोपमदशभागा जघन्या चत्वार उत्कृष्टा स्थितिः। एवं पूर्वप्रस्तटोत्कृष्टान् भागान् जघन्यपदे स्थापयता स्तानेवांश्चैकेन दशभागेनाभ्यधिकानुत्कृष्टपदे कुर्वता तावन्नेयं यावत्त्रयोदशप्रस्तटे नव सागरोपमदशभागा जघन्या, उत्कृष्टा तु [दश] दशभागा इति ॥११५॥ इत्थं प्रथमपृथिव्यां प्रतिप्रस्तटं जघन्यामुत्कृष्टां च स्थितिं प्रतिपाद्य शेषास्वप्युत्कृष्टां तां तावत्प्रतिपादयन्नाह—

उवरिखिइठिइविसेसो, सगपयरविभाग इच्छसंगुणिओ ।
उवरिमखिइठिइसहिओ, इच्छियपयरम्मि उक्कोसा ॥११६॥

[उपरिक्षितिस्थितिविश्लेषः] उपरिक्षितिस्थितेः पात इत्यर्थः, स्वकप्रतरविभागः क्रियते यश्च तत्र लभ्यते भागः सः 'इच्छासंगुणितः' इच्छयाऽभीष्टप्रतरसंख्यालक्षणया गुणितः सन् 'उपरिमक्षितिस्थितिसहितः' सागरोपमादिपाश्चात्यपृथ्वीस्थितिसमन्वितः [ 'इच्छितप्रतरे' ] अभीष्टप्रतरे उत्कृष्टा स्थितिर्भवति। इयमत्र भावना—यदा शर्कराप्रभायां प्रथमप्रस्तट एवोत्कृष्टा स्थितिर्ज्ञातुमिष्यते तदा शर्कराप्रभाया उत्कृष्टस्थितेः सागरोपमत्रयलक्षणाया मध्याद्रत्नप्रभोत्कृष्टा स्थितिः सागरोपमलक्षणा पात्यते, ततो जातं सागरोपमद्वयम्, तच्चैकादशभिः शर्कराप्रभाप्रतरैरपहृतम्, अपहृते च लब्धौ द्वौ सागरोपमैकादशभागौ, तौ चेष्टप्रतरप्रमाणेनैकलक्षणेन गुणिते "एक्कगुणं तत्तियं चेव" इति वचनात् तन्मात्रस्थितावुपरितनक्षितिस्थित्या सह संयोजने तयोर्जातमिदमेकं सागरोपमं द्वौ सागरोपमस्यैकादशभागौ, इयं च तत्रोत्कृष्टा स्थितिः ।

एवं तावन्नेयं यावदेकादशप्रस्तटे द्वौ सागरोपमैकादशभागावभीष्टप्रतरसङ्ख्ययैकादशलक्षणया गुणितौ, ततो जाता द्वाविंशतिः सागरोपमैकादशभागाः, तेषां चैकादशभिर्भागे हृते लब्धे द्वे सागरोपमे, तत उपरितनक्षित्या एकसागरोपमलक्षणया सह मीलिते जातानि त्रीणि सागरोपमाणि, इयमेव च तत्रोत्कृष्टा स्थितिः । एवमन्यास्वपि पृथ्वीषु प्रतिप्रस्तटं परिभाव्योत्कृष्टा स्थितिरानेयेति ॥ ११६ ॥ इह च भागवृद्धिः कासु कासु पृथ्वीषु भवति कासु च न भवति ? इति दर्शयन्नाह—

रयणाईपुढवीसु, णायव्वा जा खिई चउत्थी उ ॥
पंचमियाइविसेसो, अरयवसाहिय फलं होइ ॥ ११७ ॥

रत्नादिपृथ्वीनां प्रस्तटेषु ज्ञातव्या भागवृद्धिस्तावद्यावत् 'क्षिति' पृथ्वी चतुर्थी । 'तु' पूर्ववत् । ततः परं का वार्ता ? इत्याह—'पञ्चम्यादिविशेष' पञ्चम्यादिपृथ्वीषु विशेषः प्राक्तनपृथ्व्यपेक्षया प्रस्तटेष्वायुर्वृद्धौ वर्तते, स चायम्—प्राक्तनपृथ्वीचरमप्रस्तटोपरितनस्थितिविश्ले-(श्ले)षस्य स्वप्रस्तटसंख्याभागापहारे आद्यप्रस्तटेषु भागलाभः प्रागासीत् । पञ्चमीप्रभृति तु प्रथमत एव सभागसागरोपमलाभः । यथा—चतुर्थ्यां दश सागरोपमाणि, पञ्चम्यां तु सप्तदश परा स्थितिः, तयोर्विश्ले (श्ले) षे जातं सप्त सागरोपमाणि, तेषां पञ्चमपृथ्वीप्रस्तटैः पञ्चभिर्भागे हृते लब्धं सागरोपमं द्वौ च सागरोपमपञ्चमभागौ, इदं तु लब्धमिष्टप्रतरलक्षणया संख्यया यदा गुण्यते तदा वक्ष्यमाणं फलं भवतीति । आह किमेतदेवोत्कृष्टस्थितिप्रमाणमाहोस्वित्किञ्चिदन्योऽपि विशेषः समस्ति ? इत्याशङ्क्याह—'जघन्यसहित' स्वकीयजघन्यस्थितिसमन्वितं "उपरिक्षितिस्थितिविश्ले (श्ले) ष" इत्यादिना करणेन लब्धस्य फलम् ? इत्याह—

'फलं' उत्कृष्टस्थितिलक्षणं भवतीति ॥ ११७ ॥ आह विदितमेतद्यदुदितं पञ्चम्याः प्रभृति विशेषः, परं द्वितीयादिपृथ्वीषु पटादिप्रस्तटेषु भागगणनया यदा सागरोपमं लभ्यते तदा च का वार्त्ता ? इत्याह—

पयरम्मि जम्मि अयरं, सयलं वड्ढइ गणिज्जमाणम्मि ।
भागेहिं तओ करणं, छेयविभत्तं फलं होइ ॥ ११८ ॥

प्रतरे यस्मिन् 'अतरं' सागरोपमं 'सकलं' परिपूर्णं 'वर्धते' वृद्धिं याति, कथंभूते सति ? इत्याह—'गण्यमाने' संख्यायमान इत्यर्थः, तदनन्तरं किं विधेयम् ? इत्याह—भागैस्ततः करणं वाह्यते, तत इष्टप्रतरे ये लब्धा भागास्ते छेदेन विभज्यन्ते, ततश्छेदविभक्तं फलं भवति । अयमत्र भावः—यथा द्वितीयपृथिव्यामिष्टप्रतरे पष्टे एकादशभक्तसागरोपमभागद्वयस्य मूलप्रतरलब्धस्य षड्भिर्गुणने जाता द्वादश भागाः, एतेषामेकादशभिर्भागे लब्धमेकं सागरोपममवशिष्टश्चैकादशभागः । ततः सप्तमप्रस्तटे तस्मिन्नवशिष्टैकादशभागे मूलप्रतरलब्धं भागद्वयं क्षिप्तं जातास्त्रय एकादशभागाः । अष्टमे एतत्त्रयलब्धे द्वयक्षेपे पञ्च । नवमे पञ्चकमध्ये द्वयक्षेपे सप्त । दशमे सप्तसु द्वयक्षेपे नव । एकादशे तु नवसु द्वयक्षेपे जाता एकादश भागाः, एषां चैकादशभिर्भागे दत्ते लब्धं पुनः सागरोपमम्, तस्मिंश्च पष्ठप्रतरलब्धसागरोपमक्षेपे रत्नप्रभा [सागरोपमक्षेपे च] सागरोपमत्रयम्, एतदेव च तत्रोत्कृष्टा स्थितिः । एवमन्यास्वपि पृथ्वीषु स्वस्वभागक्षेपेण भावना कार्येति ॥ ११८ ॥ इदानीं द्वितीयादिपृथ्वीप्रस्तटेषु षट्त्रिंशत्संख्येषु प्रमाणं जघन्यमुत्कृष्टं च दर्शयन्नाह—

अयरोवमं जहण्णं, वितियाए पत्थडम्मि पढमम्मि ।
अयरोवमसुकोसं, एक्कारसभाग दो अण्णे ॥ ११९ ॥

न तीर्यत इत्यतरः—सागरस्तेनोपमा यस्य तदतरोपमं 'जघन्य' जघन्यस्थितिप्रमाणम्, क ? इत्याह—द्वितीयाया पृथिव्या सर्वस्थिनि प्रस्तटे प्रथमे। तथा 'अतरोपमं' उक्तरूपमेव 'उत्कृष्टं' स्थितिप्रमाणमेकादशभागौ द्वावन्याविति ॥११९॥ अस्यामेव शेषप्रतराविदेशमाह—

एवं विइयवराए, वुड्ढीए जाव तिन्नि अयराइं।
ताइं चिय तइयाए, पढमे पयरे जहन्नेणं ॥ १२० ॥
ताइं चिय उक्कोसा, चउरो नवभाग होंति अयराणं।
चउरुत्तरिया वुड्ढी, सेसेसु जाव सत्तयरा ॥ १२१ ॥
सत्तेव चउत्थीए, अयरोवम ठिति जहन्निया होइ।
सत्तेव य उक्कोसा, तिन्नेव य सत्तभागा उ ॥ १२२ ॥

'एवं' प्रथमप्रतरवद् 'द्वितीयस्यां पृथ्व्यां' प्रतिप्रतरमपरापरभागद्वयवृद्धिलक्षणया तावद्यावदेकादशप्रस्तटे प्राप्तानि त्रीण्यतराणि, एकस्य सागरोपमस्य रत्नप्रभापृथ्वीप्रतरस्येहानुवर्तनाद्भागोऽत्र भागवृद्धिवशेन लभ्यत्वात्। अथ वालुकां प्रतीत्याह—'तानि चेव' त्रीणि सागरोपमाणि तृतीयायां पृथिव्यां प्रथमे प्रतरे 'जघन्येन' जघन्यतः स्थितिर्भवतीति ॥१२०॥ 'तान्येव' त्रीणि सागरोपमाणि 'उत्कृष्टा' उत्कर्षवती स्थितिः 'चत्वारो नवभागा' नवभागीकृतस्य सागरोपमस्य चत्वारो भागा इत्यर्थः, भवन्ति 'अन्ये तु' सागरोपमत्रयातिरेकिणः पुनः प्रथमप्रतरे। यथा प्रथमप्रस्तटे तथा शेषेष्वपि इत्याह—चतुरुत्तरिका पूर्वा(वं)पूर्वसागरोपमनवभागचतुष्टयलक्षणे वृद्धिर्नेतव्या यावन्नवमप्रतरे प्राप्तान्युत्कृष्टतः सप्ततराणीति ॥१२१॥ सप्तैव चतुर्थ्यां पृथिव्यां प्रथमप्रस्तटे अतरोपमानि स्थितिर्जघन्यका

भवति । सप्तैव चातराण्युत्कृष्टा स्थितिस्त्रय एव च सप्तभागाः 'तुः' पूरणे तत्रैव प्रस्तट इति ॥१२२॥ अस्यामेव शेषप्रस्तटातिदेशमाह—

एवं तिउत्तराए, वड्ढीए ताव जाव दस अयरा ।
पंचमिए दसअयरा, ठिती जहण्णा मुणेयव्वा ॥ १२३ ॥
एक्कारस उक्कोसा, दो चेव य पंचभाग णिद्दिट्ठा ।
सदुभागअयरवड्ढी, णेयव्वा जाव सत्तरस ॥ १२४ ॥
छट्ठीए जहण्णेणं, सतरस अयरोवमा मुणेयव्वा ।
अट्ठारसमुक्कोसा, दो य तिभागा विणिद्दिट्ठा ॥ १२५ ॥

'एवं' प्रथमप्रस्तटवत् त्र्युत्तरया वृद्ध्या तावन्नेयं यावत्सप्तमप्रतरे जातानि दशातराणि । अथ धूमप्रभायां पञ्चम्यां पृथिव्यां दशातराणि स्थितिर्जघन्या मुणितव्या, प्रथमप्रस्तट इति गम्यते ॥१२३॥ एकादश सागरोपमान्युत्कृष्टा द्वौ चैव च पञ्चमागौ निर्दिष्टौ तत्रैव । शेषप्रस्तटातिदेशमाह—'सद्विभागातरवृद्धिः' एकं सागरोपमं द्वौ च सागरोपमस्य पञ्चभागौ प्रतिप्रतरं वृद्धिर्नेतव्या तावद्यावत्सप्तदशातरोपमाण्युत्कृष्टा स्थितिः पर्यन्तप्रतर इति ॥ १२४ ॥ षष्ठ्यां पृथिव्यां जघन्येन सप्तदशातरोपमानि स्थितिर्मुणितव्या । अष्टादशसागरोपमानि मकारोऽलाक्षणिकः, उत्कृष्टा स्थितिर्द्वौ च त्रिभागौ सागरोपमस्य विनिर्दिष्टाविति ॥ १२५ ॥ शेषप्रतरेष्वतिदेशमाह—

एवं विउत्तराए, णेयव्वं होइ जाव बावीसा ।
बावीस सत्तमाए, तेत्तीसं होंति उक्कोसा ॥ १२६ ॥

'एवं' प्रथमप्रतरवद् 'द्व्युत्तरया' त्रिभागद्वययुक्तसागरोपमलक्षणया वृद्ध्या तावन्नेतव्यं भवति यावद्द्वाविंशतिः सागरोपमानि षष्ठपृथिव्यां

तृतीयप्रस्तटे उत्कृष्टा स्थितिर्भवतीति । अथ महातमःप्रभायाम्—द्वाविंशति सागरोपमानि जघन्या स्थितिः सप्तम्याम्, त्रयस्त्रिंशत्सागरोपमानि भवन्त्युत्कृष्टा स्थितिः । सर्वत्राप्याद्यप्रस्तटोत्कृष्टा स्थितिरधस्तनाधस्तनप्रस्तटे जघन्यस्थितितया ज्ञातव्या । अत्र च शरीरोपपातविरहादिका चिन्ता नारकवक्तव्यता वक्ष्यमाणदेवेन्द्रकेष्विव बहुमुचिता परमत्रग्रन्थविस्तरभयात् ग्रन्थकारस्ता लिखितवानिति समाप्यते । तदर्थिना तु ग्रन्थान्तरादवगमेयेति ॥१२६॥ इदानीं नरकेन्द्रवक्तव्यतामुपसंहरन्नाह—

नरइंदयाण लेसो, गुरुहिं मयरागदोसरहिएहिं ।
कहिओ घेतव्वो वा, हासाइविगहरहिएहिं ॥१२७॥

'नरकेन्द्रकाणां' आवलिकाप्रविष्टनरकावासलक्षणानामुपलक्षणत्वात्पुष्पावकीर्णनरकाणां च 'लेशः' संक्षेपवक्तव्यतालेशलक्षण 'गुरुभि' र्गणधरादिभिः, कीदृशैः ? इत्याह—'मदरागद्वेषरहितैः' अहङ्काराभिष्वङ्गमत्सररहितैरत्यन्तविश्वसनीयवचनैरित्यर्थः, किम् ? इत्याह—'कथितः' प्रतिपादितः । अयं च सम्प्रति मया तदनुसारेण ज्ञाप्यमानः 'ग्रहीतव्यः पुनः' आदरणीयस्तु हास्यादिविकथारहितैः सद्भिः शिष्यैः, आप्तप्रणीतत्वात्पारम्पर्येण हास्यादिदोषलक्षणयाऽवज्ञया ग्रहणे प्रत्युत महानर्थसम्भवादिति ॥ १२७ ॥

इति श्रीमुनिचन्द्रसूरिविरचितायां देवेन्द्रनरकेन्द्रप्रकरणवृत्तौ नरकेन्द्राधिकारः समाप्तः ।

त्येकगुणानि तानीति ॥ २२४ ॥ एवं त्र्यस्रराशौ चतुरस्रराशौ च द्विगुणीकृते वृत्तराशौ च त्रिगुणे यत्संपन्नं तदाह—

सत्त सय सत्तवीसा, चत्तारि सया उ होंति चउणउया ।
चत्तारि य छासीया, सोहम्मे होंति वट्टाई ॥ २२५ ॥

सप्त शतानि सप्तविंशानि, चत्वारि शतानि तु भवन्ति चतुर्णवतानि, चत्वारि च षडशीतानि, किम् ? इत्याह—सौधर्मदेवलोके भवन्ति 'वृत्तादीनि' वृत्तत्र्यस्रचतुरस्राणि विमानानीति ॥ वृ० ७२७, त्र्य० ४९४, चतु० ४८६ ॥ २२१ ॥ इत्थं सौधर्मे प्रतिपाद्येशानेऽपि वृत्तादिप्रमाणं प्रतिपादयितुमाह—

एमेव य ईसाणे, णवरं वट्टाण होइ णाणत्तं ।
दो सय अट्टत्तीसा, सेसा जह चेव सोहम्मे ॥ २२६ ॥

'एवमेव च' पूर्वगाथोक्तक्रमेण विमानप्रमाणं 'ईशाने' द्वितीयदेवलोके बोद्धव्यम् । सर्वथासाम्यपरिहारायाह—'नवरं' केवलं वृत्तविमानानां भवति 'नानात्वं' विशेषः, तदेवाह—द्वे शते अष्टत्रिंशे वृत्तविमानानाम् । वृत्तविमानवत् त्र्यस्रचतुरस्रराश्योरपि माने कश्चित्केनचिद्विशेषः संभावयिष्यते इति तन्निरासायाह—'शेषाः' त्र्यस्राश्चतुरस्राश्च विमानाः 'यथा चैव' यत्परिमाणा एव सौधर्मे तथैव बोद्धव्याः ॥२२६॥ इत्थं शक्रेशानयोर्विभागेन वृत्तादिविमानप्रमाणं प्रतिपाद्य संप्रति तदेव तयोः समुदायेन प्रतिपादयन् क्रमेण करणभूतं गाथाद्वयमाह—

मुहभूमिसमासद्धं, वेहगुणं सोहणूण तिहिं भइयं ।
सत्तगुण दुगुणसोहणवेहजुयं चेव जम्माणं ॥ २२७ ॥

सुद्धभूमिसमासद्ध, वेहगुण सोहणूण तिहि भइय ।
पचगुणदुगुणसोहणगसजुय इयरिद्धाणं ॥ २२८ ॥

इह किलायमभिप्रायः—द्वयोरप्यनयोर्देवलोकयोश्चतस्रो विमानश्रेणय-स्तत्रैकैकस्यां श्रेण्यां त्र्यस्रवृत्तादिविमानराशयः सन्ति समुदायेन च द्वादश। तेषु च दक्षिणदिग्वर्तिवृत्तादिराशित्रयं पूर्वापर[वर्ति]वृत्तराशिद्वयं पौरस्त्यपाश्चात्ययोश्च त्र्यस्रचतुरस्रयो राश्योरर्धार्धमीलनेन निष्पन्न राशि-द्वयमिति सप्त राशयः शक्रस्याऽऽभवन्ति। शेषा औदीच्यावृत्तयो द्वौ च पौरस्त्यपाश्चात्यत्र्यस्रचतुरस्रराश्योरर्धार्धमीलने निष्पन्नौ राशी इति पञ्च राशय ईशानस्याऽऽभाव्या इति। अमुमेव चाभिप्रायं मनसि निधाय सूत्रकार [ सूत्र ]माह—

'शुद्धभूमिसमासार्द्धं' प्रागेव निरूपितस्वरूप 'वेधगुण' त्रयो-दशाभ्यस्तद्गुणितमित्यर्थं, शोधनकेन त्रिभिर्भक्तं क्रियते, तत सप्तगुणं 'द्विगुणशोधनकसंयुत' द्विगुणेन शोधनकेन—अष्टाविंशत्येत्यर्थं, वेधेन च—त्रयोदशकलक्षणेन युक्त सत, वेधेति समुच्चये, 'याम्यानां' याम्येन्द्रसंबन्धिनां श्रेणिगतविमानानां परिमाणं भवतीति ॥ २२७ ॥

इयमपि गाथा पूर्वगाथावद् व्याख्येया। नवरं त्रिभिर्भक्ते हृते पञ्च-भ्यते सत्पञ्चगुणं कर्तव्यमिति ॥ २२८ ॥

ये (या) चात्र शोधनकस्य द्वयोरपि कल्पयोर्द्विगुणस्य सतो योजना क्रियते सा चतुर्दिक्संबन्धिनां चतुर्णां शोधनकानां मध्याद्दक्षिणोत्तरयो-र्दिशोरेकैकस्य केवलस्य पूर्वपश्चिमयोश्च द्वयो शुद्धयोरर्धार्धस्य योजनेन प्रक्षमाणशोधनकमत्वात् ॥ एकैकस्य कल्पस्य शोधनकद्वयलाभ इति कृत्वा करणद्वयमेव भावयितु गाथाद्वयमाह—

दो सय अट्ठत्तीसा, सोहम्मे सत्तएण गुणिऊणं ।
तेरस पत्थड दुगुणं, च सोहणं तत्थ छोढव्वं ॥ २२९ ॥

मुखभूमिसमासार्द्धे वेधगुणे शोधनोने त्रिभिश्च भक्ते सति ये लब्धे द्वे शते अष्टत्रिंशे सौधर्मे कल्पे [ तान् ] सप्तकेन गुणयित्वा पश्चात् 'त्रयोदश प्रस्तटाः' प्रस्तटप्रमाणा इन्द्रका इत्यर्थः, द्विगुणं च शोधनकं तत्र सप्तगुणे राशौ क्षेप्तव्यमिति ॥ २२९ ॥ तथा—

दो सय अट्ठत्तीसा, ईसाणे पंचएण गुणिऊणं ।
दुगुणं च सोहणं तत्थ नियमओ होइ छोढव्वं ॥ २३० ॥

द्वे शते अष्टत्रिंशे प्राग्निरूपिते एव 'ईशाने' द्वितीयदेवलोके पञ्चकेन गुणयित्वा ततः 'द्विगुणं च' द्विगुणं पुनः शोधनकं 'तत्र' पञ्चगुणे राशौ नियमाद्भवति क्षेप्तव्यम् । इन्द्रकप्रक्षेपश्चात्र नास्ति, तेषां शक्रस्यैवाऽऽभाव्यत्वादिति ॥ २३० ॥ एवं सप्तगुणे पञ्चगुणे चैकत्र द्विगुणशोधनकेन्द्रकयोः दशकसंयोगेऽन्यत्र द्विगुणशोधनकसंयोग एव यल्लब्धं तद्दर्शयितुमाह—

सत्तरस सया सत्तुत्तरा उ सोहम्मि आवलिविमाणा ।
बारस अट्ठारहिया, ईसाणे आवलिविमाणा ॥ २३१ ॥

सप्तदश शतानि सप्तोत्तराणि 'तुः' पूर्ववत् सौधर्मे 'आवलिविमानाः' श्रेणिप्रतिबद्धविमानविशेषा भवन्ति । तथा-द्वादश शतान्यष्टादशाधिकानि 'ईशाने' द्वितीयदेवलोके आवलिविमाना इति ॥ २३१ ॥

अनयोरेव कल्पयोः पुष्पावकीर्णविमानप्रमाणनिर्धारणाय गाथाद्वयमाह—

इगतीस सयसहस्सा, अट्ठाणउतिं भवे सहस्साइं ।
दो य सया तेणउया, सोहम्मे पुप्फकिण्णाणं ॥ २३२ ॥

एकत्रिंशत् 'शतसहस्राणि' लक्षा अष्टानवतिर्भवेत्सहस्राणि द्वे च शते त्रिनवते सौधर्मे 'पुष्पकीर्णानां' पुष्पप्रकरवदितस्ततो विप्रकीर्णरूपाणां पुष्पावकीर्णानामित्यर्थः, सौधर्मसामान्यविमानेभ्यो द्वात्रिंशल्लक्षप्रमाणेभ्य स्सद्व्यशीतीनां सप्तोत्तराणां श्रेणिप्रतिबद्धविमानानां शोधने शेषस्य पुष्पावकीर्णराशेरेतत्संख्यस्य सम्भवादिति ॥ २३२ ॥

सत्तावीस सयलक्खा, अट्ठाणउइं भवे सहस्साइं ।
सत्त सया बासीया, ईसाणे पुप्फकिण्णाणं ॥ २३३ ॥

सप्तविंशतिर्लक्षा अष्टानवतिर्भवेयुः सहस्राणि सप्त शतानि द्व्यशीत्यानीशाने पुष्पकीर्णानाम्, अत्रापि ईशानविमानेभ्योऽष्टाविंशतिलक्षप्रमाणेभ्योऽष्टादशाधिकद्वादशशतप्रमाणश्रेणिप्रतिबद्धविमानशोधनके कृते प्रस्तुतविमानसंख्यासम्भव इति ॥ २३३ ॥ अथ सनत्कुमारमाहेन्द्रयोः श्रेणिगतविमानप्रमाणानयनाय करणं करणफलं च गाथाद्विकेनाह—

अउणापण्णट्ठतीसाइमुहभूमिसमास अद्धं नेच्छे ।
बारसओ सोलसओ, गच्छइ गेण्हिज्ज गुणाए ॥ २३४ ॥

एकोनपञ्चाशदष्टत्रिंशल्लक्षणयोर्मुखभूम्योः समासं सप्ताशीतिलक्षणमर्द्ध-अर्द्धभागलक्षणं 'न' नैव 'इच्छति' प्रतिपद्यते यतः तत 'द्वादशकोऽवलम्ब्य' षट्प्रमाणलक्षणो यो वर्तते तस्यार्द्धं गृहीत्वा तेन गुणयेन्मुखभूमिसमासार्द्धमेवेति ॥ २३४ ॥

तो बारस सोलगुणा, अवसेसेहिं तिहिं च तो हरे भाग ।
भागहिए ज लद्धं, तत्थ सय सत्तर होइ ॥ २३५ ॥

ततोऽवलम्बार्द्धगुणितमुखभूमिसमासराशेः संपन्नाद्विनवत्यधिकपञ्चशतप्रमाणात्मकाद्द्वादशशोधनकं 'अपनय' त्यक्त्वा, त्रिभिश्च 'तत'

तस्य राशेर्हरेद्भागम्, ततो भागे हृते यल्लब्धं तत्र शतं 'सत्तरं'ति सप्तत्यधिकं भवतीति ॥ २३५ ॥

तं तित्थं काऊणं, सोहणभागं हराहि तिहिं पच्छा ।
जं लद्धं तं दुगुणं, खिव तंसे इयरमेगगुणं ॥ २३६ ॥

'तं' राशिं 'त्रिस्थं' स्थानत्रयस्थापितं कृत्वा शोधनभागं हर त्रिभिः, पश्चाद्यल्लब्धं चतुष्टयरूपं तद्विगुणं क्षिप 'त्र्यस्रे' त्र्यस्रविमानराशौ, 'इयरं'ति इतरस्मिंश्चतुरस्रराशौ एकगुणं क्षिपेति ॥ २३६ ॥

इय माहिंदत्थं पडि–रासीए तिरिण वीहरासीओ ।
तो णं सणंकुमारे, वट्टगरासिं करे तिगुणं ॥ २३७ ॥

'एनं' त्रिस्थं 'माहेन्द्रस्थं' माहेन्द्रदेवलोकवर्तिनं राशिं सप्तत्यधिक–अष्टसप्तत्यधिक–चतुःसप्तत्यधिकशतलक्षणं एकत्र स्थाने स्थापयित्वेति गम्यते, ततः किं कर्त्तव्यम्? इत्याह––प्रतिराश्या द्वितीयस्थाने स्थापयित्वा एतानेव त्रीनपि वृत्तत्र्यस्रचतुरस्रसंज्ञितान् 'इह' प्रस्तावे राशीन्, ततः 'णं' इति वाक्यालङ्कारे ['सनत्कुमारे'] सनत्कुमारदेवलोके वृत्तकराशिं कुर्यात् त्रिगुणम्, पूर्वदक्षिणापरदिग्गतवृत्तविमानानां सनत्कुमारेन्द्रस्याऽऽभाव्यत्वादिति ॥ २३७ ॥ ततोऽपि किं कर्त्तव्यम्? इत्याह––

तिगुणीकए उ वट्टे, तंसे दुगुणे तहेव चउरंसे ।
पच्छा मज्झिमइंदा, बारस वट्टेसु पक्खेवो ॥ २३८ ॥

त्रिगुणीकृते तु 'वृत्ते' वृत्तराशौ त्र्यस्रे द्विगुणे तथैव चतुरस्रे द्विगुण एव पश्चान्मध्यमेन्द्रकाद् द्वादश वृत्तेषु विमानेषु प्रक्षेपः कर्त्तव्य इति ॥ २३८ ॥ एवंकृते सति सनत्कुमारे यल्लब्धं तद्दर्शयितुमाह––

पंच सया बावीसा, तिन्नेव सया य हुंति छप्पन्ना।
तिन्नि सया अडयाला, सणंकुमारस्स वट्टाई ॥ २३९ ॥

पञ्च शतानि द्वाविंशानि, त्रीण्येव शतानि तु भवन्ति षट्पञ्चाशानि, त्रीणि शतान्यष्टचत्वारिंशानि 'सनत्कुमारस्य' तृतीयकल्पस्यामी 'वृत्तादीनि' वृत्तत्र्यस्रचतुरस्राणि विमानानि यथासङ्ख्यं भवन्तीति ॥ २३९ ॥

माहिंदस्सो रासी, पुव्वं पडिरासिऊण जो ठविओ।
तस्स य वट्टगरासिं, पक्खिवसु दुगुणमियरं तु ॥ २४० ॥

माहेन्द्रस्य 'राशि' वृत्तत्र्यस्रचतुरस्रलक्षितः 'पूर्वं' सनत्कुमारवृत्तादिविमानानयनावसरे प्रतिराश्य द्वितीयराशिरूपतया कृत्वा य स्थापित आसीत् 'तस्य तु' तस्मिन् राशित्रये पुनर्वृत्तराशिमेकगुणं कुर्यात्, औदीच्यश्रेणिगतविमानानामेव माहेन्द्रनाम्न इन्द्रस्याऽऽयत्तत्वात्। द्विगुणं 'इतर तु' इतरं पुनस्त्र्यस्रराशिं चतुरस्रराशिं च कुर्यात्, यतो माहेन्द्रस्य औदीच्य [ ] त्र्यस्रराशिश्चतुरस्रराशिश्च शुद्ध एवाऽऽभवति, पौरस्त्यपाश्चात्ययोश्चार्धमर्धमिति कृत्वा द्विगुणावेतौ राशी क्रियेते इति ॥ २४० ॥ अथ सति यथागतं माहेन्द्रे सर्वसंख्यमाह—

सत्तर सय अणूणं, तिन्नेव सया हवंति छप्पण्णा।
तिन्निय सया अडयाला, वट्टादि माहिंदकप्पस्स ॥२४१॥

'सत्तर शत' शतं सप्तत्यधिकमित्यर्थः, 'अनून' परिपूर्णं त्रीण्येव शतानि भवन्ति षट्पञ्चाशानि, त्रीणि शतान्यष्टचत्वारिंशानि [ 'वट्टादि' त्ति ] विभक्तिलोपात् वृत्तादीनि वृत्तत्र्यस्रचतुरस्राणि 'माहेन्द्रकल्पस्य' माहेन्द्रनाम्नो चतुर्थकल्पस्येति ॥ २४१ ॥ साम्प्रतं द्वयोरपि कल्पयोर्यावती श्रेणिगतविमानसङ्ख्या संजाता तां दर्शयितुमाह—

बारस सय छव्वीसा, कप्पम्मि सणंकुमार आवलिया ।
अट्ठ सया चोवत्तर, विमाण माहिंद आवलिया ॥२४२॥

द्वादश शतानि षड्विंशानि 'कल्पे' सनत्कुमारे 'आवलिका' इति आवलिकागतविमानसंख्या । तथाष्टशतानि चतुःसप्ता (प्तता) नि 'विमान' इति विभक्तिलोपाद्विमानानां 'माहेन्द्रे' चतुर्थदेवलोके आवलिका भवतीति ॥ २४२ ॥ अनयोरेव कल्पयोः सामान्यविमान-संख्यायाः श्रेणिगतविमानानामपकर्षे यः शेषः पुष्पावकीर्णराशिस्तत्प्रमाणं प्रतिपादयितुं गाथाद्वयमाह—

एक्कारस लक्खाइं, अट्ठाणउतिं भवे सहस्साइं ।
सत्त सया चोवत्तर, हवंति पुप्फावकिण्णाणं ॥ २४३ ॥

एकादश लक्षा अष्टानवतिर्भवेयुः सहस्राणि सप्त शतानि चतुः-सप्ता(प्तता)नि भवन्ति पुष्पावकीर्णानां सनत्कुमारदेवलोके इति ॥२४३॥

सत्तेव सयसहस्सा, णवणउइं खलु भवे सहस्साइं ।
सयमेगं छव्वीसं, हवइ उ पुप्फावकिण्णाणं ॥ २४४ ॥

सप्तैव शतसहस्राणि नवतिः 'खलुः' वाक्यालङ्कारे भवेयुः सह-स्राणि शतमेकं षड्विंशं भवति तु पुष्पावकीर्णानां माहेन्द्रदेवलोके । द्वादशलक्षप्रमाणाया अष्टलक्षप्रमाणायाश्च कल्पद्वयप्रतिबद्धसर्वविमान-संख्यायाः सकाशाद्यथाक्रममनन्तराभिहितश्रेणिगतविमानसंख्यापनयने यथोक्तपुष्पावकीर्णसंख्यासंभवादिति ॥ २४४ ॥ एतानि च वृत्तादि-विमानानि तिर्यग्यथा स्थितानि [ तथा ] प्रतिपादयन्नाह—

सव्वेसु पत्थडेसुं, मज्झे वट्टं अणंतरं तंसं ।
एयंतर चउरंसं, पुणो वि वट्टं तओ तंसं ॥ २४५ ॥

'सर्वेषु प्रस्तटेषु' उडुप्रस्तटप्रभृतिद्वाषष्टिप्रमाणेषु मध्ये वृत्तम्, 'अनन्तरं' वृत्ताव्यवहितमेव त्र्यस्रम्, तत 'एयतर' त्ति एतदनन्तरं चतुरस्रं विमानं भवति, 'पुनरपि' चतुरस्रानन्तरं वृत्तं ततस्त्र्यस्रमित्यादिक्रमेण तावज्ज्ञेयं यावच्छ्रेणिपर्यन्तम् इति ॥ २४५ ॥ इत्थं तिर्यग्व्यवस्थानमभिधाय सांप्रतमूर्ध्वाधोव्यवस्थानस्वरूपनिर्देशायाह—

वट्टं वट्टस्सुवरिं, तंसं तंसस्स उप्परिं होइ।
चउरंसे चउरंसं, उड्ढं तु विमाणसेढीओ ॥ २४६ ॥

वृत्तं सर्वेष्वावलिकाप्रविष्टविमानं वृत्तविमानस्योपरि भवति। त्र्यस्रं त्र्यस्रस्य 'उप्परिं' त्ति उपरि भवति। 'चउरंसे' इति विभक्तिव्यत्ययाच्चतुरस्रस्य चतुरस्रमुपरि भवति। 'ऊर्ध्वं [तु]' ऊर्ध्वं पुनः 'विमानश्रेणयः' आवलिकारूपा इत्थं भवन्तीति। श्रीउडुप्रस्तटे तु नास्त्ययं व्यवहारः, अधोविमानानां तत्रा(त्राऽ)संभवादिति ॥२४६॥ वृत्तादिस्वरूपमेवाह—

वट्टं च वलयगं पिव, तंसं सिंघाडगं पिव विमाणं।
चउरंसविमाणं पुण, अक्खाडगसंठियं भणियं ॥ २४७ ॥

वृत्तं विमानं 'च' इति वाक्यान्तरोपन्यासे 'वलयमिव' शङ्खदन्तादिघटितवलयाकारमित्यर्थः। त्र्यस्रं शृङ्गाटकमिव विमानम्, शृङ्गाटकं नाम जलजत्रिकोणं फलविशेषः। चतुरस्रविमानं पुनरक्षपाटकसंस्थितं भणितम्, अक्षपाटको नाम प्रेक्षणकप्रेक्षणप्रवृत्तजनावस्थानयोग्यः स्थानविशेषः, स किल चतुरस्रो भवतीति ॥ २४७ ॥ एतेष्वेव द्वारनियमनायाह—

सव्वे वट्टविमाणा, एगदुवारा हवंति विन्नेया।
तिन्नि य तंसविमाणे, चत्तारि य हुंति चउरंसे ॥२४८॥

सर्वे वृत्तविमानाः 'एकद्वाराः' एकप्रवेशनिगममार्गा भवन्ति विज्ञेयाः। त्रीणि च द्वाराणि त्र्यस्रविमाने। चत्वारि द्वाराणि भवन्ति चतुरस्र इति ॥ २४८ ॥ एतानि च यत्परिक्षिप्तानि भवन्ति तद्दर्शनायाह—

पागारपरिक्खित्ता, वट्टविमाणा हवंति सव्वे वि।
चउरंसविमाणाणं, चउद्दिसिं वेइया होंति ॥ २४९ ॥

'प्राकारपरिक्षिप्तानि' प्राकारः—वप्रः शाल इत्येकोऽर्थः, स च स्वभावत एवोत्तुङ्गकपिशीर्षकविभूषितोपरितनभागः चर्यावक्र(चक्र)-द्वाराट्टालकादिस्वावयवसंपन्नस्तेन परिक्षिप्ता वृत्तविमाना भवन्ति 'सर्वेऽपि' सर्वप्रस्तटवर्तिनोऽपि। चतुरस्रविमानानां 'चतुर्दिशि' चतसृष्वपि दिक्षु वेदिका भवन्ति, वेदिका नाम मुण्डप्राकार इति ॥ २४९ ॥ तथा—

जत्तो वट्टविमाणा, तत्तो तंसस्स वेइया होइ।
पागारो बोद्धव्वो, अवसेसेहिं तु पासेहिं ॥ २५० ॥

'यतः' यस्यां दिशि वृत्तविमानाः 'ततः' तस्यां दिशि त्र्यस्रे वेदिका भवति। 'प्राकारौ' उक्तलक्षणौ बोद्धव्यौ च शेषयोः पार्श्वयोः। चतुर्थपार्श्वं तु नास्ति त्र्यस्रत्वादिति ॥ २५० ॥ संप्रति सामस्त्येन विमानाकारप्रतिपादनायाह—

आवलियासु विमाणा, वट्टा तंसा तहेव चउरंसा।
पुप्फावकिण्णगा उण, अणेगविहरूवसंठाणा ॥ २५१ ॥

'आवलिकासु' सर्वप्रस्तटेषु पूर्वादिदिग्गतासु विमाना वृत्त(त्ताः) त्र्यस्रास्तथैव चतुरस्रा भवन्ति, आकारान्तरभाजो विमानस्य तासु कदाचनाप्यभावात्। पुष्पावकीर्णकाः पुनर्विमाना अनेकविधरूपाणि—

नन्द्यावर्त्तस्वस्तिकचक्रादिविचित्ररूपभाञ्जि संस्थानानि—आकारा येषां ते तथा, सर्वेषां प्रत्यग्राकाराणां तेषु कस्यचिदप्यविद्यमानत्वादिति ॥२६१॥ एतान्यपि पुष्पावकीर्णानि कस्यां दिशि सन्ति कस्यां न सन्तीति निदर्शयन्नाह—

पुप्फावकिण्णा खलु, दाहिणओ पच्छिमेण उत्तरओ ।
पुव्वेण विमाणिंदस्स नत्थि पुप्फावकिण्णा उ ॥२६२॥

पुष्पावकीर्णका विमाना 'खलु' वाक्यालङ्कारे 'दक्षिणतः' दक्षिणस्यां दिशि श्रेणिगतविमानक्षेत्रपरिहारेण 'पश्चिमेन' पश्चिमायां दिशि 'उत्तरतः' उत्तरस्यां दिशि इन्द्रकविमानापेक्षया वर्तन्ते। 'पूर्वेण' पूर्वस्यां दिशि 'विमानेन्द्रस्य' इन्द्रकविमानस्य 'न' नैव 'सन्ति' वर्तन्ते पुष्पावकीर्णविमाना 'अत्र' एतेषु प्रस्तटेषु प्रभृतिष्विति ॥२६२॥ स्थापना चेयम्— एतानि श्रेणिगतविमानानि येषां ईशमसुद्राऽऽनुपरिपाटीनि तदर्शयन्नाह—



बावट्ठी आवलिया, तीसे अट्ठ सयपुव्वयणम्मि ।
टक्कं पडिदिसि विमाणा, जे आवलियापविट्ठा उ ॥ २६३ ॥

द्वाषष्टिर्विमानानि ' आवलिका ' या उडुप्रस्तटप्रतिबद्धा तस्याः ' अर्द्धं ' इत्यर्द्धप्रमाणा एकत्रिंशदित्यर्थः ' स्वयंभूरमणे ' स्वयंभुवो नाम देवास्ते रमन्ते क्रीडन्ति यत्र स तथा तत्र—सर्वपर्यन्तवर्तिनि नीरनिधौ, किम् ? इत्याह—'ऊर्ध्वं' ऊर्ध्वां दिशमाश्रित्य पतन्ति विमाना ये आवलिकाप्रविष्टाः ' तुः ' पूरणार्थः । इदमुक्तंभवति—सौधर्मदेवलोके प्रथमप्रस्तटे या द्वाषष्टिविमानप्रमाणाश्चतस्र आवलिकाः प्रवृत्तास्तासामर्द्धमर्द्धं स्वयंभूरमणजलधेरुपरितनभागेऽवतरति । शेषं चार्वाचीनद्वीपसमुद्रेष्विति सामर्थ्याद्गम्यत इति ॥ २५३ ॥ इदमेव सविशेषमाह—

तिरिण य दीवे तिरणोव समुद्दे बाहिरे अबाहाए ।
जेसिं पडिहिं विमाणा, ते आवलियापइट्टा उ ॥ २५४ ॥

त्रींश्च द्वीपान् त्रीनेव समुद्रान् 'बाह्यान्' समुद्रचक्रवालबहिर्वर्तिनः प्रतीत्य ' अबाधया ' इन्द्रकविमानादन्तरालभावेन वर्तते, शेषद्वीपसमुद्रजातमिति गम्यते । के च ते त्रयो द्वीपाः समुद्राश्च ? अत आह—येषामूर्ध्वं पतन्ति विमानाः 'ते' ये प्राक् त्र्यस्रचतुरस्रवृत्तरूपतया निरूपिताः ' आवलिकाप्रविष्टाः ' आवलिकागताः 'तुः' पूरणार्थः ॥२५४॥ तानेव नामग्राहं दर्शयन् गद्यं सूत्रमाह—

देवे दीवे १ नागे समुद्दे २ जक्खे दीवे ४ भूए य समुद्दे ८ सयंभुरमणे दीवे १६ सयंभुरमणे समुद्दे य ३१ ॥

यथा 'देवः' देवाभिधो द्वीपस्तदनु नागसमुद्रस्ततोऽपि जक्षो द्वीप[स्ततोऽपि] भूतश्च समुद्रस्ततोऽपि स्वयंभूरमणो द्वीपः [ततोऽपि] स्वयंभूरमणसमुद्रश्च । अत्र च देवादिषु स्वयंभूरमणद्वीपपर्यन्तेषु पञ्चद्वीपसमुद्रेषु शेषाण्येकत्रिंशद्विमानान्येकं द्वे चत्वारि अष्टौ षोडशेति

क्रमेणोपरिभागे स्थितिमवलम्बन्ते । शेषद्वीपसमुद्रावावलिकागतविमानव्यूह्नोपरितनभागा एवेति ॥ एतेषां च श्रेणिगतविमानानां यावदन्तरं तत्प्रतिपादयितुमाह—

जे केइ विमाणिंदम्मि विमाणा तेसिमन्तरं जं तु ।
सो संखेज्जइभागो, उड्ढलोयस्स बोधव्वो ॥ २५५ ॥

ये केचिद् 'विमानेन्द्रे' इन्द्रकविमानसमाननामन्युडुप्रस्तटादौ प्रस्तटविशेषे 'विमानाः' वृत्तादयस्तेषां 'अन्तरं' परस्परमन्तराल यत्पुनर्वर्तते स सङ्ख्येयभागः, कस्य? इत्याह—ऊर्ध्वलोकस्य विस्तारक्षेत्रापेक्षया, अनुस्वारश्च प्राकृतत्वात्, 'बोद्धव्यः' मन्तव्यः । इदमुक्तं भवति—यानि श्रेणिगतविमानानि यत्रोर्ध्वलोके वर्तन्ते तस्य यद्विस्तारप्रमाणं तस्य सङ्ख्येयभागस्तेषां विमानानां परस्परमन्तरालप्रमाणमिति ॥२५५॥ अधुना यावन्ति अन्तरान्तराण्यूर्ध्वलोकमपेक्ष्य वर्तन्ते तद्दर्शयितुमाह—

बारेक्कारस दस सत्त तिन्नि तिन्नेव पत्थडाण तु ।
दोण्ह दोण्ह कप्पाण अवरा अट्ठ गेवेज्जा ॥ २५६ ॥

द्वादश सौधर्मेशानयोः, त्रयोदशाना प्रस्तटाना तत्र सद्भावेनैकयामेवान्तराणां भावात् । एवमेकादश सनत्कुमारमाहेन्द्रयोः । दश ब्रह्मलोकलान्तकयोः । सप्त शुक्रसहस्रारयोः । त्रीण्यानतप्राणतयोः । त्रीण्येवारणाच्युतयोः । 'अन्तरा तु' अन्तराणि पुनर्द्वयोर्द्वयोः कल्पयोरनन्तरमिदं भणितयोः 'अन्तराणि' विचालरूपाणि वर्तन्ते । तथाष्टौ 'ग्रैवेयकाणि' ग्रैवेयकसम्बन्धीन्यन्तराणीति ॥२५६॥ संप्रति तिर्यग्लोकात्कियद्दूरे उडुविमानमिति दर्शयन्नाह—

चर्थपदं पृच्छति। मध्यमा तूभयथाप्यागच्छति, अल्पतरगौरवविषयत्वात् । अभ्यन्तरया वाऽऽदिष्टमर्थपदं तया सह प्रवध्नाति ग्रन्थिबन्धं करोतीति । वाह्या वाह्यत्वेनानाकारितैवागच्छति, अल्पतमगौरवविषयत्वात्, तस्याश्चार्थपदं वर्णयत्येवेति(—पदमेव वर्णयतीति) । चकारो भिन्नक्रमे, तत आत्मरक्षकाश्च, सन्नद्धबद्धकवचाः उत्पीडितशरासनपट्टिकाः गृहीतविविधप्रहरणाः सौधर्मसभायामास्थानगतं सप्रभुं परिक्षिप्य बद्धपाल्यो ये वर्तन्ते । ' अनीकानि ' हस्त्यश्वरथपदातिवृषभगन्धर्वनाट्यलक्षणानि सप्त । तत्राद्यानि पञ्च संग्रामोपयोगीनि, द्वे तु भोगफले इति । 'तथा' इति समुच्चये । याश्च ' अग्रमहिष्यः ' पट्टराज्ञीसदृक्षास्त्रिदशपतिपत्न्यः ताः सौधर्मे ईशाने कल्पविमानेषु बोद्धव्या इति ॥ २७४ ॥ एतदेव सविशेषं भावयितुमाह—

परिसाईया सव्वे, सोहम्मे जे य होंति ईसाणे ।
पत्तेयविमाणेसुं, वसंति न उ सक्कतणएसु ॥ २७५ ॥

' परिषदादयश्च ' देवविशेषा अनन्तरमेव निरूपिताः सर्वे सौधर्मे ये च भवन्ति ईशाने, ते किम् ? इत्याह—'प्रत्येकविमानेषु' पृथक्पृथगवस्थितलक्षणेषु वसन्ति, ' न तु ' न पुनः ' सक्कतणएसु ' त्ति शक्रसत्कनिलयेषु. सेवावसरागतानामेव पञ्चस्वपि शक्रविमानेषु परिषदादीनामवस्थानसंभवादिति ॥ २७५ ॥ उपरितनदेवलोकेषु परिषदादिदेवनिवासनिरूपणायाह—

कप्पविमाणेसु भवे, परिसाओ आयरक्खऽणीया य ।
एगविमाणे सामाणिया य तह लोगपाला य ॥ २७६ ॥

' कल्पविमानेषु ' उक्तलक्षणेषु 'भवेयुः' निवसेयुः, के? इत्याह—

र्थानां विमानानामिति ॥ २५९ ॥ आदिमान्त्ययोर्विमानेन्द्रयोः प्रमाण प्रतिपादयन्नाह—

पढम उडुविमाणं, पणयालीसं भवे सयसहस्सा ।
एगं च सयसहस्सं, भणियं सव्वट्ठसिद्धं तु ॥ २६० ॥

'प्रथम' प्रथमप्रस्तटवर्तितया 'उडुविमान' श्रेणिगतविमान-प्रज्ञापनाविधिमूलं पञ्चचत्वारिंशद्भवेच्छतसहस्राणि योजनानामायामतो विष्कम्भतश्च, सर्वतो वृत्तरूपत्वात्तस्य । 'एगं च' एकं पुनर्योजनानां शतसहस्रं भणितं 'सर्वार्थसिद्धं' समस्तविमानोपरिवर्ति । 'तु' पादपूरणार्थः ॥ २६० ॥ शेषेन्द्रकप्रमाणप्रतिपादनायाह—

तेण परं सेसाणं, पयराणं जे भवे विमाणिंदा ।
वित्थारेणं असंखाईं सयसहस्साईं वित्थिण्णा ॥ २६१ ॥

'तेन परं' इति इतः परं 'शेषाणां' उडुप्रस्तट [ सर्वार्थसिद्ध-प्रस्तट ] व्यतिरिक्तानां प्रतराणां सम्बन्धिनो ये भवेयुः 'विमानेन्द्राः' इन्द्रकनामानो विमानाः, [ ते ] किम् ? इत्याह—विस्तारेणासंख्येयानि योजनानां शतसहस्राणि विस्तीर्णा इति ॥ २६१ ॥ संप्रतीन्द्रकादि-तावलिकाप्रतिबद्धपुष्पावकीर्णविमानविस्तारमानप्रतिपादनायाह—

आवलियाहिँ विमाणा, वित्थारेणं भणिया असंखेज्जा ।
संखेज्जमसंखेज्जा, भणिया पुप्फावकिण्णा य ॥ २६२ ॥

आवलिकासु विमाना विस्तारेण भणिता 'असंख्येया' असंख्येययोजनप्रमाणाः । 'संखेज्जमसंखेज्ज' त्ति संख्येययोजनविस्तारा असंख्येययोजनविस्ताराश्च भणिताः पुष्पावकीर्णास्तु ॥ २६२ ॥

एतच्च प्रमाणं प्रमाण [अङ्गुल] योजनापेक्षया । तच्च प्रमाणाङ्गुलमेव कथं निष्पद्यते ? इति तावदङ्गुलमेव प्रतिपाद्यते—

इह त्रिविधमङ्गुलम्–आत्माङ्गुलं उत्सेधाङ्गुलं प्रमाणाङ्गुलं चेति । तत्र ये यत्र युगे पुरुषाः स्वकीयाङ्गुलाष्टोत्तरशतसमुच्छ्रितदेहास्तेषां यत्स्वकीयाङ्गुलं तदात्माङ्गुलमित्युच्यते, अनियतप्रमाणं चेदम्, युगे युगेऽपरापरदेहप्रमाणानां पुरुषाणां भावात् । उत्सेधाङ्गुलं तु–" परमाणू रहरेणू, तसरेणू अग्गयं च वालस्स । " इत्यादिक्रमेणानुयोगद्वारनिरूपिते [ न ] लब्धात्मलाभं सर्वयुगेष्वपि प्रतिनियतकस्वरूपं सूत्रधारकं वि....हस्तनिष्पत्तिहेतु । प्रमाणाङ्गुलं तु भरतचक्रवर्तिहस्ताङ्गुष्ठरेखातुल्यविष्कम्भायामबाहल्यम्, तच्च किलोत्सेधाङ्गुलापेक्षया चत्वारि शतान्यायामेन सूच्येत्यर्थः, सार्द्धे द्वे अङ्गुले विष्कम्भेणाङ्गुलं च बाहल्येनेति । एवं चायामस्य विष्कम्भगुणने उत्सेधाङ्गुलप्रमाणानां चतुरस्राणामङ्गुलप्रमाणमात्रबाहल्यानां क्षेत्रखण्डानां गणितव्यवहारेण सहस्रप्रमाणानां लाभादुत्सेधाङ्गुलक्षेत्रमपेक्ष्य प्रमाणाङ्गुलक्षेत्रं सहस्रगुणं भवति, उक्तं च–" उस्सेहंगुलमेगं, हवइ पमाणंगुलं सहस्सगुणं । " इति । मेयविषयश्चैतेषामित्थमवसेयः–" आयंगुलेण वत्थुं, उस्सेहपमाणओ मिणसु देहं । नगपुढविविमाणाइं, मिणसु पमाणंगुलेणं तु ॥ १ ॥ " इह च नगपृथ्व्यादिप्रमाणप्रज्ञापनायां प्रमाणाङ्गुलक्षेत्रलब्धमुत्सेधाङ्गुलसहस्रं कल्पनया श्रेणिरूपतया व्यवस्थाप्य व्यापार्यत इत्येके मन्यन्ते । अन्ये पुनः प्रमाणाङ्गुलसूचिरुत्सेधाङ्गुलशतचतुष्टयप्रमाणाऽऽपाद्यत इति व्याकुर्वते । अनुयोगद्वाराणां चूर्णौ वृत्तौ च पुनरित्थमुपलभ्यते–" जे य

१ " परमाणू तसरेणू रहरेणू अग्गयं च वालस्स । " इत्यपि पाठः ।

'पूर्वेण' पूर्वस्यां दिशि सौधर्मावतंसकविमानात् 'तुः' प्राग्वत् 'वेडूयं' वैडूर्यनामकं विमानम्, रुचकं पुनर्दक्षिणे दिग्भागे, 'अपरेण' अपरस्यां दिशि 'असोकं' अशोकाभिधानम्, पुनः 'मसक्कसारं' मसक्कसाराभिधानं 'चः' समुच्चये 'उत्तरतः' उत्तरस्यां दिशीति ॥२६३॥

एवंणामा उ भवे, कप्पविमाणा हवंति विण्णेया ।
जे दक्खिणेण इंदा, तेसिं खलु होंति पत्तेयं ॥ २६४ ॥

एवंनामान एव तुशब्दस्यैवकारार्थत्वात् भवः—संसारस्तदेकदेशत्वाद्भवः—देवलोकस्तत्र, कल्पः—समस्तो देवलोकस्तत्प्रतिमविभूतिभाजनत्वेन कल्पभूतविमानाः कल्पविमाना भवन्ति विज्ञेयाः, ते च ये 'दक्खिणेन' दक्षिणस्यां दिशि 'इन्द्राः' शक्रसनत्कुमारब्रह्ममहाशुक्रलक्षणास्तेषां 'खलुः' वाक्यालङ्कारे भवन्ति प्रत्येकम् । इह किलाच्युतपर्यन्तेषु द्वादशसु कल्पेषु प्रथमतृतीयपञ्चमसप्तमदेवलोकगता इन्द्रा दाक्षिणात्या इति परिभाष्यन्ते, शेषाश्च षडौदीच्याः । दक्षिणोत्तरयोर्दिशोः केवलतदाभाव्यपञ्चपञ्चविमानानां क्रमेण शास्त्रान्तरे वर्णनात् । ततस्तेषां दाक्षिणात्यानामिन्द्राणां मध्यविमानापेक्षया पूर्वादिदिग्गतानि चत्वारि चत्वारि वैडूर्यादीनि विमानानि भवन्तीति ॥२६४॥

रुयगे य मंदरे या, अस्सोगे चेव सत्तवण्णे य ।
पुव्वादिआणुपुव्वी, चउद्दिसिं होंति चत्तारि ॥ २६५ ॥

रुचकश्च मन्दरश्चाशोकश्चैव सप्तपर्णश्च 'पुव्वाइआणुपुव्वि' त्ति, इह किलानुपूर्वी त्रिधा—पूर्वानुपूर्वी पश्चानुपूर्वी अनानुपूर्वी चेति, ततश्चानुपूर्व्यन्तरव्यवच्छेदार्थमाह—पूर्वा दिग् आदिर्यस्याः सा पूर्वादि सा चासावानुपूर्वी च पूर्वाद्यानुपूर्वी तया पूर्वानुपूर्व्येति भावार्थः । विभ-

लिङ्गलोपश्च प्राकृतत्वात् । 'चतुर्दिशि' चतसृषु दिक्षु भवन्ति चत्वारि विमानानीति ॥ २६५ ॥

पुव्वणामा उ भवे, कप्पविमाणा हवंति वियक्खेया ।
ते उत्तरेण इंदा, तेसिं खलु होंति पत्तेयं ॥ २६६ ॥

इयं च गाथा व्याख्यातार्थैव, परं ये तु उत्तरेणेन्द्रास्ते ईशानमाहे-न्द्रलान्तकमहाशुक्रप्राणताच्युतनामानः षड् वक्तव्या इति ॥ २६६ ॥ यत्र च प्रस्तटे यानि यत्र मध्यविमानस्य नाम तद्दर्शयितुमाह—

पंच वि कप्पविमाणा, उवरिं कप्पाण होंति नायव्वा ।
मज्झिल्ला य विमाणा, कप्पसरिसनामया होंति ॥ २६७ ॥

यद्यपि च केवलमेकस्यापि इत्यपिशब्दार्थः, कल्पविमाना 'उवरिं' ति उपरितनप्रस्तटे त्रयोदशद्वादशादौ 'कप्पाणं' कल्पे-न्द्रलोकानां भवन्ति ज्ञातव्या । दाक्षिणात्यानामिन्द्राणां दक्षिणस्यां दिशि, औदीच्यानामुत्तरस्यां दिशि । 'मज्झिमा य' मध्यविमाना पुनः कल्पसदृशनामका भवन्ति, केचित्सौधर्मेशानादिकल्पसमाननामान इत्यर्थः । यथा सौधर्मावतंसक ईशानावतंसक इत्यादीनि ॥ २६७ ॥
सम्प्रति त्रायस्त्रिंशेन्द्रसामानिकप्रभृतिसम्बन्धिविमानवक्तव्यतामाह—

तावत्तीसाण उ कंचणाइं सामाणियाण सयकंता ।
पत्तेयविमाणा दक्खिणेण कप्पेसु दिसु होंति ॥ २६८ ॥

'त्रायस्त्रिंशानां तु' त्रायस्त्रिंशनाम्नां त्रयस्त्रिंशत्संख्यानां च पितृ-व्यादिमहत्तरस्थानीयदेवानां पुनः 'कंचनानि' काञ्चनमयत्वेन प्राप्त-काञ्चनाभिधानानि 'सामानिकानां' इन्द्रसमानरूपायुष्कादिगुणग्रामाणां देवविशेषाणामेव 'शतकान्तानि' शतकान्तरत्नविशेषमयानि 'प्रत्ये-

कविमानाः ' इति प्रत्येकविमानान्येकैकस्य त्रायस्त्रिंशस्य सामानिकस्य चैकैकं विमानमित्यर्थः ' दक्षिणेन ' दक्षिणस्यां दिशि व्यवस्थितेषु 'कल्पेषु' देवलोकेषु 'त्रिषु' सौधर्मसनत्कुमारब्रह्मलोकनामसु भवन्तीति ॥ २६८ ॥

सयज्जलेसु समाणा, तायत्तीसा य कंचणपहेसु ।
पत्तेयविमाणा उत्तरेसु कप्पेसु दुसु होंति ॥ २६९ ॥

'शतज्वलेषु' शतज्वलनामकरत्नमयेषु विमानेषु 'समानाः' सदृशा इन्द्रेणेन्द्रसामानिका इत्यर्थः, दीर्घत्वं च प्राकृतत्वात्, त्रायस्त्रिंशाश्च ' काञ्चनप्रभेषु ' काञ्चनप्रभरत्नमयेषु वसन्ति । एते च सामानिकत्रायस्त्रिंशावासभूताः प्रत्येकविमानाः ' उत्तरयोः ' ईशानमाहेन्द्रयोः कल्पयोर्द्वयोर्भवन्ति । अन्येषु देवलोकेषु मनागमन्दरागद्वेषत्वेन सामानिकत्रायस्त्रिंशानामेकविमानेऽपि निवाससंभवादयमित्थं नियमः कृतः । इयं च गाथा " विषमाक्षरपादं च " इत्यादिगाथानुलक्षण(गाथालक्षणानु)सारिणी विज्ञेयेति ॥ २६९ ॥

संझप्पभं च सोमस्स, वरसिट्ठं जमस्स उ ।
सयज्जलं वरुणस्स, वग्गु वेसवणस्स उ ॥ २७० ॥

सन्ध्याप्रभं च ' सोमस्य ' पूर्वदिग्लोकपालस्य, वरशिष्टं ' यमस्य तु ' यमनाम्नो लोकपालस्य पुनः, शतज्वलं ' वरुणस्य ' पश्चिमाशापतेः, वल्गु ' वैश्रमणस्य तु ' उत्तरदिक्पालस्य पुनरिति ॥ २७० ॥

एवंनामा चत्तारि विमाणा जाव बंभलोगो उ ।
जे दाहिणेण इंदा, तेसिं खलु लोगपालाणं ॥ २७१ ॥

एवंनामानश्चत्वारो विमानास्तावज्ज्ञेया यावद् ब्रह्मलोकः 'तुः' पूरणार्थः,

ये 'दक्षिणेन' दक्षिणस्यां दिशि 'इन्द्राः' शक्रसनत्कुमारब्रह्मनामान तेषां संबन्धिनः 'खलु' वाक्यालङ्कारे 'लोकपालाः' पूर्वादिदिग्विभागानां प्रत्येकं प्रत्येकं भवन्तीति ॥ २७१ ॥

सोमे य सव्वओभद्दे, सुजाए सोमणे इय ।
पुव्वाइआणुपुव्वी, चउद्दिसिं होंति चत्तारि ॥ २७२ ॥

'सोम' सोमाभिधानः, चकारो भिन्नक्रमः, ततः सर्वतोभद्रश्च सुजातः 'सोमणे इय' त्ति सुमना इति च–एवं 'पूर्वानुपूर्व्या' उक्त-क्रमणया चतुर्दिक्षु भवन्ति चत्वारो विमाना इति ॥ २७२ ॥

एवंनामा उ भवे, कप्पविमाणा हवंति सव्वे वि ।
जे उत्तरेण इंदा, तेसिं खलु लोगपालाणं ॥ २७३ ॥

एवंनामान एव तुशब्दस्यैवकारार्थत्वात् 'भवे' देवलोके कल्पविमाना भवन्ति सर्वेऽपि, कल्पविमाना नाम कल्पपरिपालकदेवविशेषनिवासभूता विमानविशेषाः । यौ 'उत्तरेणेन्द्रौ' ईशानमाहेन्द्रौ तयोः खलु संबन्धिनां लोकपालानामिति ॥ २७३ ॥

परिसा य आयरक्खा, अणीय तह जा य अग्गमहिसीओ ।
सोहम्मे ईसाणे, कप्पविमाणेसु बोद्धव्वा ॥ २७४ ॥

'परिषत्' शमिका–चण्डा–जाताख्यास्त्रिधा । तत्र शमिका उपशमत्वेन स्थिरप्रकृतितया शमवती, रजसमोर्वा कोपोत्सुक्यादिभावात् शमवत्युपादेयवचनतयेति शमिका । तथा तथाविधमहत्त्वाभावेनेषत्कोपादिभावाच्चण्डा । प्रकृतिमहत्त्वपरिवर्जितत्वेनास्थान(ने)कोपादीनां जातत्वाज्जाता । एता च(एता एव)क्रमेणाभ्यन्तरा मध्यमा बाह्या चेति तत्राभ्यन्तरा समुत्पन्नप्रयोजनेन प्रभुणा गौरवार्हत्वादाकारितैव पार्श्वे समागच्छति, ता चासा-

र्थपदं पृच्छति। मध्यमा तूभययाप्यागच्छति, अल्पतरगौरवविषयत्वात् । अभ्यन्तरया वाऽऽदिष्टमर्थपदं तया सह प्रबध्नाति ग्रन्थिबन्धं करोतीति । बाह्या बाह्यत्वेनानाकारितैवागच्छति, अल्पतमगौरवविषयत्वात्, तस्याश्चार्थपदं वर्णयत्येवेति(—पदमेव वर्णयतीति) । चकारो भिन्नक्रमे, तत आत्मरक्षकाश्च, सन्नद्धबद्धकवचाः उत्पीडितशरासनपट्टिकाः गृहीतविविधप्रहरणाः सौधर्मसभायामास्थानगतं स्वप्रभुं परिक्षिप्य लोकपाल्यो ये वर्तन्ते । 'अनीकानि' हस्त्यश्वरथपदातिवृषभगन्धर्वनाट्यलक्षणानि सप्त । तत्राद्यानि पञ्च संग्रामोपयोगीनि, द्वे तु भोगफले इति । 'तथा' इति समुच्चये । याश्च 'अग्रमहिष्यः' पट्टराज्ञीसदृशास्त्रिदशपतिपत्न्यः ताः सौधर्मे ईशाने कल्पविमानेषु बोद्धव्या इति ॥ २७४ ॥ एतदेव सविशेषं भावयितुमाह—

परिसाईया सव्वे, सोहम्मे जे य होंति ईसाणे ।
पत्तेयविमाणेसुं, वसंति न उ सक्कतणएसु ॥ २७५ ॥

'परिषदादयश्च' देवविशेषा अनन्तरमेव निरूपिताः सर्वे सौधर्मे ये च भवन्ति ईशाने, ते किम् ? इत्याह—'प्रत्येकविमानेषु' पृथक्पृथगवस्थितलक्षणेषु वसन्ति, 'न तु' न पुनः 'सक्कतणएसु' त्ति शक्रसत्कनिलयेषु, सेवावसरागतानामेव पञ्चत्वापि शक्रविमानेषु परिषदादीनामवस्थानसंभवादिति ॥ २७५ ॥ उपरितनदेवलोकेषु परिषदादिदेवनिवासनिरूपणायाह—

कप्पविमाणेसु भवे, परिसाओ आयरक्खऽणीया य ।
एगविमाणे सामाणिया य तह लोगपाला य ॥ २७६ ॥

'कल्पविमानेषु' उक्तलक्षणेषु 'भवेयुः' निवसेयुः, के? इत्याह—

'परिषद्' पारिषद्देवा आत्मरक्षा अनीकाश्च 'एकविमाने' साधारण-रूप एव सामानिकाश्च । 'तथा' इति समुच्चये, लोकपालाश्चेति ॥ २७६ ॥ एतदेव व्याख्यातुमाह—

परिसाईया सव्वे, एगविमाणे हवंति नियमाओ ।
कप्पे सणंकुमारे, माहिंदे बंभलोगे य ॥ २७७ ॥

'परिषदादिका' पारिषद्यप्रभृतयोऽनन्तरोक्ता देवविशेषाः 'सर्वे' निरवशेषा एकविमाने भवन्ति 'नियमाओ'त्ति नियमेन, केषु देवलोकेषु ? इत्याह—कल्पे सनत्कुमारे माहेन्द्रे ब्रह्मलोके चेति ॥ २७७ ॥ अत्रार्थे उपपत्तिमाह—

परिसाईया सव्वे, उवरिं तु हवंति कारणं किं तं ? ।
भन्नइ जं उवरिमया, कप्पेसु न पेम्मरागिल्ला ॥ २७८ ॥

परिषदादिकाः सर्वे 'उपरि तु' उपरितनदेवलोकेषु पुनरेकत्रैव भवन्तीत्यत्र कारणं किं सर्वेनैवम् ? 'भण्यते' उच्यते—'यद्' यस्मात्कारणात् उपरिमका देवाः 'कल्पेषु' स्वावासविमानलक्षणेषु 'न' नैव 'पेम्मरागिल्ल'त्ति प्रेमरागिणः । रागशब्देनात्र मत्सर एव विवक्षितः । नात्यन्तं सौधर्मेशानदेवा इव परस्परं रागद्वेषवन्तो वसन्ति इत्येकविमानेऽपि वसतां तेषां तथाविधरागद्वेषाभावेन पुष्कलसमाधानलाभ एवेति ॥२७८॥ अथ लान्तकादिषु स्वपारिषद्यादिदेवानामवस्थानमाह—

तेण परं जे देवा, परिसाईया वसंति ते सव्वे ।
इंदविमाणेसु चिय, ईसाईदोसरहियत्ता ॥ २७९ ॥

तत परं ये देवाः 'परिसाईय'त्ति पारिषद्याद्याः 'वसन्ति' अवस्थितिं लभन्ते ते 'सर्वे' निरवशेषाः, क ? इत्याह—'इंदवि-

माणेसुं चिय ' त्ति इन्द्रसंबन्धिविमानेष्वेव। कुतोऽयं तेषामेकत्रैवाव-स्थानसंभवः? इत्याह—'ईर्ष्यादिदोषरहितत्वात' तथाविधासूयामत्स-राहङ्कारादिदोषव्रजविकलत्वादिति ॥ २७९ ॥ अथाग्रमहिषीणां प्रमाणं क्रियान्तरं चाभिधित्सुराह—

सक्कस्स देवरण्णो, देवीओ अट्ठ होंति नायव्वा।
एक्केका वि य एत्तो, विउव्वए सोलस सहस्से ॥ २८० ॥

शक्रस्य 'देवराजस्य' त्रिदशनायकस्य 'देव्यः' अग्रमहिष्योऽष्टौ भवन्ति ज्ञातव्याः। एकैकापि च ' इतः ' अष्टाग्रमहिषीदेवीमध्यात्, किम्? इत्याह—विकुरुते षोडश सहस्राणि। एतदुक्तं भवति—यदा शक्रः प्रवीचाराभिप्रायपरायणो भवति तदा सपदि वैक्रियसमुद्घातेन परिणम्य स्वशिखरोल्लिखितगगनान्तरालमतिबहलरश्मिजालपाटलीकृत-सकलदिक्चक्रवालमतिशयोत्तुङ्गपवनप्रेर्यमाणरमणीयध्वजपताकामालमेक-लक्षयोजनप्रमाणं संभोगभारसहमुत्तरविमानं विकुरुते, तदनु तन्मध्य-वर्तिन्यां मणिपीठिकायां स एव दिव्यरूपं शयनीयमेकं निर्मापयति, ततोऽसावष्टाभिर्देवीभिः प्रत्येकं कृतषोडशसहस्रप्रमाणोत्तरवैक्रियशरीरा-भिर्द्वाभ्यां च गन्धर्वनाट्यानीकाभ्यां सहितः कृतानेकोत्तरवैक्रियशरीर-स्तत्र विमाने समारोहति। ततो देवीभिः कृतोत्तरवैक्रियाभिस्सह महता संरम्भेण प्रवीचारमारभ्य कियतोऽपि कालादूर्ध्वं विगतवेदोदयविप्लवो भवतीति ॥ २८० ॥ सामस्त्येन सर्वदेवीसंबन्ध्युत्तरवैक्रियाप्रमाह—

एगं च सयसहस्सं, अट्ठावीसं भवे सहस्साइं।
सक्कस्स देवरण्णो, देवीणं होति ओरोहो ॥ २८१ ॥

' एगं च ' एकमेव ' शतसहस्रं ' लक्षमष्टाविंशतिर्भवेयुः सहस्राणि

शक्रस्य देवराजस्य देवीनां भवति 'अवरोध' अन्तःपुरम्, षोडशानां सहस्राणामष्टाभिर्गुणने एतावत्या सङ्ख्याया समवादिति। अङ्कतोऽपि १२८००० ॥ २८१ ॥ संप्रति सौधर्माधिपतौ स्वस्थितिकालं परिपास्यति सत्युत्कृष्टादिस्थितयो देव्यः सौधर्मवासिन्यो यावत्यस्ततश्च्यवन्ते तदर्थप्रतिपादनाय गाथासप्तकमाह—

सक्कस्स देवरण्णो, आउठिई जाव खिज्जए ताव ।
अच्छरगणपरिवट्टा, हवन्ति जावतिया सुणसु ॥ २८२ ॥

शक्रस्य देवराजस्य 'आयुःस्थिति' सागरोपमद्वयलक्षणा यावत्क्षीयते तावत् 'अप्सरोगणपरिवर्ता' नवनवोत्पादलक्षणा भवन्ति यावन्तस्तान् शृणुतेति ॥ २८२ ॥

चत्तालसयसहस्सा, कोडीण होंति रूवमब्भहिया ।
अच्छरगण परियट्टा, बोधव्वा वज्जपाणिस्स ॥ २८३ ॥

चत्वारिंशच्छतसहस्रा कोटीनां भवन्ति 'रूवमब्भहिय' त्ति रूपेणाधिकानामुत्कृष्टरूपाणामित्यर्थः, मकारोऽलाक्षणिकः, अप्सरोगणाना विभक्तिव्यत्ययलोपौ प्राकृतत्वात् 'परिवर्ता' परिवृत्तयो बोद्धव्या 'वज्रपाणे' शक्रस्येति ॥ २८३ ॥

चत्तालसयसहस्सा, कह होंता ? सुणसु भण्णए एव ।
पलिओवमाइं दोण्णी, तिपयसुण्णजुए काउं ॥ २८४ ॥

चत्वारिंशच्छतसहस्राणि कोटीनामिति गम्यते, अप्सरोगणपरिवर्ताः कथं भवन्ति ? इति प्राह शिष्यः, आचार्योऽप्युत्तरमाह—शृणु भण्यते 'एवं' यथा, पल्योपमे द्वे 'त्रिपदशून्ययुते' पदत्रयशून्यसहिते कृत्वा विंशतिपल्योपमकोटीकोटी व्यवस्थाप्येत्यर्थः ॥२८४॥ ततः

उक्कोसगट्ठितीणं, जहण्णगादिभइयाण जे लद्धा ।
तट्ठीयाणं णियमा, ते परियट्टा मुणेयव्वा ॥ २८५ ॥

'उत्कृष्टस्थितीनां' पञ्चाशत्पल्योपमप्रमाणपरमायुष्काणां 'जहण्णगाइ' त्ति पल्योपमप्रमाणजघन्यस्थितीनां 'आदिशब्दात्' मध्यमस्थितीनां च संबन्धिना कालेनेति वाक्यशेषः, स चोत्कृष्टस्थितीनां पञ्चाशत्पल्योपमप्रमाण(:)मध्यमस्थितीनां द्व्यादिपल्योपमप्रमाणः किम् ? इत्याह—भक्तानां—शक्रस्थितिकालपल्योपमानां यानि लब्धानि पल्योपमानि 'तत्स्थितीनां' भागहारलब्धपल्योपमप्रमाणायुष्कालानां देवीनां 'नियमात्' नियमेन 'ते' लब्धपरिमाणाः परिवर्त्ता मुणितव्याः । तत्रोत्कृष्टस्थितिदेव्यपेक्षया 'चत्ताल' इत्यादिगाथोक्तमेव प्रमाणम्, मध्यमस्थितिनामनियतम्, जघन्यस्थितीनां तु स्वयमेव वक्ष्यतीति ॥ २८९ ॥ संप्रति प्राणतेन्द्रे विंशतिसागरोपमप्रमाणमायुष्कालं परिपालयति पञ्चाशत्पल्योपमायुष्काणां सौधर्मदेवीनां यावन्तः परिवर्त्तास्तान् प्रस्तावाद्दर्शयन्नाह—

दो सागरोवमाइं, पल्ले काऊण दसगुणे कुज्जा ।
पण्णासा पण्णेहिं, भागे लद्धं च तत्थ इमं ॥ २८६ ॥

'द्वे सागरोपमे पल्यानि कृत्वा' विंशतिकोटीकोटीरूपतया व्यवस्थाप्येत्यर्थः । ततो दशगुणानि कुर्यात्, एवं च विंशतिसागरोपमायुष्कप्राणतेन्द्रस्थितिकालपल्योपमसंख्या कोटीशतद्वयप्रमाणा संपद्यते । तदनु पञ्चाशता पल्योपमैर्भागे हृते 'लब्धं च' प्राप्तं पुनस्तत्र 'इदं' यदुत चतस्रः कोटीकोट्यो देवीनां परिवर्त्ताः, अङ्कतोऽपि ४००००००००००००००० ॥२८६॥ सांप्रतं शक्रस्थितिकालपल्योपमानां पञ्चाशता पल्योपमैर्भागे हृते यथा 'चत्ताल' इत्यादिगाथोक्तसंख्या लभ्यते तथाह—

समसुण्णं पाडेउं, सद्धा चत्तालकोडिलक्खाओ ।
रूवहियाइ ति पुणो, अओ य ता परमपल्लाओ ॥ २८७ ॥

' समशून्यं ' यत्प्रमाण यथोक्तप्रमाणस्य मार्गहाररासी शून्य तथै-कमेव विंशतिपल्योपमकोटीप्रमाणाद्धान्यराशे ' पातयित्वा ' अपनीय पश्चात्पश्चभिर्भागे लब्धाश्चत्वारिंशत्कोटिलक्षा देवीपरिवर्तीनामिति । अङ्कतोऽपि ४०००००००००००००० । रूपाधिका इति यदुक्तं तद् व्याचष्टे-' रूपाधिका ' इति पुन लब्धाङ्कतुक् । इत्याह-यतश्च'ता' अप्सरसः परमकाला इति ॥ २८७ ॥ अथोत्कृष्टस्थितिदेवीपरिवर्तप्रमाणं निगमयन् जघन्यस्थितिदेवीपरिवर्तप्रमाणप्रतिपादनायाह-

उक्कोसगठिईणं, एवइया चेव होंति परियट्टा ।
जाओ जहन्नठीया, कोडाकोडीओ ता वीस ॥ २८८ ॥

' उत्कृष्टस्थितीनां ' पञ्चाशत्पल्योपमायुष्काणां देवीनां ' एतावन्त एव ' उक्तप्रमाणा एव भवन्ति परिवर्ता । तथा या ' जघन्यस्थितय ' पल्योपमप्रमाणायुष्का देव्य कोटीकोटय प्रसिद्धरूपा एव ' ता ' इति विभक्तिव्यत्ययात् तासां विंशति परिवर्तानाम्, यावन्ति सक्रायु-काल्यराशौ पल्योपमानि तावन्तो जघन्यस्थितीनां देवीनां परिवर्ता इति भाव । अङ्कतश्च २०००००००००००००० ॥ २८८ ॥

एताश्च देव्य किं सर्वकल्पेषु भवन्ति ? उत न ? इति उच्यते-नेति, तर्हि क भवन्ति ? सौधर्मेशानयोरिति ब्रूम । तत्रापि किं प्रत्येकविमानवास्तव्या साधारणविमानवास्तव्या वा ? उच्यते-उभय-थापि न दोष । यदि प्रत्येकविमानवास्तव्यास्तर्हि कियन्ति विमा-नानि ? इत्याह-

पत्तेयविमाणाणं, देवीणं छ भवे सयसहस्सा ।
सोहम्मे कप्पम्मी, ईसाणे होंति चत्तारि ॥ २८९ ॥

'प्रत्येकविमानानां' केवलदेवीलोकभोग्यानां देववासानां 'देवीनां संबन्धिनां षट् भवेयुः 'शतसहस्राणि' लक्षाः, क ? इत्याह—सौधर्मे कल्पे । ईशाने भवन्ति चत्वारि शतसहस्राणि प्रत्येकविमानानामिति ॥२८९॥

एतेषु हि विमानेषु देव्य एवाधिपतयो न देवाः । ताश्च गणिका-लोकप्रायाः स्वेच्छाचारपरायणाः । याः पल्योपमादारभ्य यावत्सप्तप-

---

१ "एषु च (सौधर्मकल्पगतापरिगृहीतासत्केषु) विमानेषु यासां देवीनां पूर्णमेकं पल्योपमं स्थितिस्ताः सौधर्मदेवानामेवोपभोग्याः, यासां तु पल्योपममादिं कृत्वा एकद्वित्रिसंख्यातासंख्यातसमयैरभ्यधिका स्थितिर्यावत् पूर्णानि दशपल्योपमानि ताः सर्वा अपि सनत्कुमारदेवानां भोग्याः, उपरितनदेवास्तु ताः सर्वथा नेच्छन्ति । याः पुनः पल्योपमदशकादूर्ध्वं समयादिवृद्धया यावद्विंशतिपल्योपमस्थितिकास्ता ब्रह्मलोक-देवानां भोग्याः, ऊर्ध्वं समयादिवृद्धया यावत् त्रिंशत्पल्योपमस्थितयः शुक्रदेवानां भोग्याः, ततः समयादिवृद्धया यावच्चत्वारिंशत्पल्योपमस्थितय आनतदेवानां स्वस्था-नस्था एव प्रवीचारणाप्रवृत्तमनोव्यापारालम्बनं भवन्ति, ततः समयादिवृद्धया यावत्प-ञ्चाशत्पल्योपमस्थितयः आरणदेवानामिति । ईशाने तु अपरिगृहीतदेवीनां चत्वारि विमानलक्षाणि, तेषु यासां साधिकं पल्योपमं स्थितिस्ता ईशानदेवानामेव भोग्याः, ततः साधिकपल्योपमादूर्ध्वं समयादिवृद्धया यावत्पञ्चदशपल्योपमस्थितयस्ता माहेन्द्र-देवानां भोग्याः, तत ऊर्ध्वं समयादिवृद्धया यावत्पञ्चविंशतिपल्योपमस्थितयस्ता लान्त-कदेवानां भोग्याः, पञ्चविंशतेरूर्ध्वं यावत्पञ्चत्रिंशत्पल्योपमस्थितयः सहस्रारदेवभोग्याः, ततो यावत्पञ्चचत्वारिंशत्पल्योपमस्थितयः प्राणतदेवानां स्वस्थानस्थाश्चित्तालम्बनं भवन्ति, ततो यावत्पञ्चपञ्चाशत्पल्योपमस्थितयोऽच्युतदेवानामिति ।" इति रूपेण संग्रहण्यां १२९–१३०–१३१–१३२ गाथाटीकायाम् ॥

२–३ अत्र यत् किल यावत् सप्तपल्योपमस्थितीनां सौधर्मदेवभोग्यत्वं यावद्

ल्योपमस्थितयस्ताः सौधर्मदेवानां प्रवीचारयोग्या वर्तन्ते । एवमीशानेऽपि याः साधिकपल्योपमादारभ्य यावत्सर्वपल्योपमस्थितयस्तास्तद्देवलोकदेवानामेव प्रवीचारविषयतामायान्ति । अन्याः पुनः पल्योपमसाधिकपल्योपमस्थितेरारभ्य यावद्दशपञ्चदशपल्योपमप्रमाणस्थितयस्तावद्यथाक्रमं सनत्कुमारमाहेन्द्रदेवानाम् । ततोऽपि याः समयाद्यधिकदशपञ्चदशपल्योपमस्थितयो यावद्विंशति[ पञ्चविंशति ]श्च पल्योपमानि तावत्ता ब्रह्मलोकलान्तकदेवानाम् । ततो याः समयाद्यधिकस्थितयो यावत्त्रिंशत्पञ्चत्रिंशच्च पल्योपमानि तावत्ताः शुक्रसहस्रारदेवानाम् । ततोऽपि याः समयाद्यधिकस्थितयो यावच्चत्वारिंशत्पञ्चचत्वारिंशच्च तावत्ता आनतप्राणतदेवानाम् । ततोऽपि याः समयाद्यधिकस्थितयो यावत्पञ्चाशत् पञ्चपञ्चाशच्च तावत्ता आरणाच्युतदेवानां प्रवीचारयोग्या भवन्तीति । प्रवीचारक्रमश्च—" दो कायपवियारा कप्पा " ( गा० १४७ ) इत्यादिना वक्ष्यत इति ॥ शेषविमानवक्तव्यतामाह—

सोहम्मे ईसाणे, जे सेसा मीसगा उ ते सव्वे ।
तेण परं जे सेसा, सणकुमारादि णिम्मीसा ॥ २६० ॥

सौधर्मे ईशाने [च] देवलोके ये ' शेषाः ' षड्लक्षचतुर्लक्षदेवीविमानशतसहस्रेभ्यो व्यतिरिक्ताः ' मिश्रकास्तु ' देवदेवीलोकसङ्कुला एव ते सर्वे विमानाः । ' तेन ' इति ततः परं ये शेषाः ' सणंकुमाराइ' त्ति सनत्कुमारादिषु देवलोकेषु 'निर्मिश्राः' देवानामेव तत्रोत्पाद-,

---

न्यपल्योपमस्थितीनामीशानदेवलोकयोग्यत्वं देवीनामुक्तं तत् परिगृहीता आश्रित्य संभाव्यते । अन्यथाऽपरिगृहीतानां पल्योपमाद्युत्कृष्टानां साधिकपल्योपमाद्युत्कृष्टानामेव क्रमेण सौधर्मेशानदेवयोग्यत्वेनोपलभ्यमानत्वादसङ्गतिः स्यात् ॥

केवलेन्द्राः केवलदेवसंभवश्च, सौधर्मेशानयोरुपरिदेवलोकेषु ग्रन्थान्तरे देव्युत्पादस्य प्रतिषेधादिति ॥२९०॥ कल्पविमानप्रमाणप्रतिपादनायाह—

सोहम्मे ईसाणे, कप्पविमाणाण होंति विक्खंभो ।
बारस य सयसहस्सा, पण्णासं चेव य सहस्सा ॥ २९१ ॥

सौधर्मे ईशाने आधारभूते 'कल्पविमानानां' केवलेन्द्राभाव्यानां पञ्चानां संबन्धी भवति विष्कम्भः, किंरूपः ? इत्याह—द्वादश च शतसहस्राणि पञ्चाशच्चैव च सहस्राणि । अङ्कतोऽपि—१२५०००० ॥२९१॥ अमुमेवार्थं विषयविभागेन व्यवस्थापयितुं गाथाद्वयमाह—

सोहम्मवडिंसे या, ईसाणवडिंसगम्मि जे भणिया ।
सक्कावासा पंच य, ईसाणे चेव आवासा ॥ २९२ ॥

सौधर्मावतंसकविमानसंबन्धात्सौधर्मावतंसकः—सौधर्मपर्यन्तप्रस्तट-स्तत्र 'चः' समुच्चये, एवमीशानावतंसके प्रस्तटे ये भणिताः प्राक् 'शक्रावासाः' केवलशक्राभाव्यत्वेन शक्रनिलयभूताः 'पञ्च च' पञ्चैव 'ईशाने चेव' इति विभक्तिव्यत्ययादीशानस्य चैवेन्द्रस्यावासाः पञ्चेत्यनुवर्तत इति ॥ २९२ ॥

तेसेयं तु पमाणं, मज्झिल्लवडिंसयाण णऽन्नेसिं ।
सेसा संखमसंखा, जोयणकोडीओ माणेणं ॥ २९३ ॥

'तेषां' पञ्चानां शक्रावासानामीशानावासानां च मध्ये 'एतत्तु' इदं पुनः 'प्रमाणं' अनन्तरोक्तं 'मध्यमावतंसयोः' सौधर्मावतंसकस्येशानावतंसकस्य चेत्यर्थः । व्यवच्छेदमाह—'न' नैव 'अन्येषां' चतुर्णाम् । तर्हि तेषां [किं] प्रमाणम् ? इत्याह—'शेषाः' चत्वारः सौधर्मावतंसकेशानावतंसकयोः प्रत्येकं बहिर्वर्त्तिनः 'संखमसंख' त्ति

केचिदसंख्याता[ केचित्संख्याता]योजनकोट्य 'मानेन' आयामविष्कम्भलक्षणेन प्रमाणेनेति ॥२९३॥ अथ प्रागुक्तयोरेव विमानयोः परिधिमाह—

उयाल चिय लक्खा, सहस्स बावन्न अट्ठ सय सियाला।
छ धणुसया धणुसय, पणसट्ठंगुल परिही ॥ २९४ ॥

एकोनचत्वारिंशदेव लक्षा सहस्राणि द्वापञ्चाशद् अष्ट शतानि सप्तचत्वारिंशानि योजनानां षट् चैकाधिकानि धनुःशतानि तथाङ्गुलानां पञ्चषष्टिरर्धाङ्गुलं च परिधिः। अङ्कतोऽपि [योजनानि] ३९५२८४७ धनूंषि ६०१ अं० ६५ $\frac{1}{2}$। अथ च—"विक्खम्भ वग्ग दहगुण करणी वट्टस्स परिरओ होइ।" इत्यनेन करणेनोत्पादनीय इति ॥२९४॥ सम्प्रति सर्वा देवजातीराश्रित्य शरीरप्रमाण प्रतिपादयितु गाथाद्वयमाह—

भवणवणजोतिसोहम्मीसाणे होंति सत्त रयणीओ।
एकेकहाणि सेसे, दुदुगे य दुगे चउक्के य ॥ २९५ ॥

'भवनवनज्योतिःसौधर्मेशाने' भवनपतिषु व्यन्तरेषु ज्योतिष्केषु सौधर्मदेवलोके ईशाने च भवन्ति सप्त 'रत्नयः' हस्ता, उत्सेधाङ्गुलनिष्पन्नाश्चैते गृह्यन्ते, "उस्सेहपमाणओ मिणसु देहं" इति वचनात्। अत परं का वार्ता? इत्याह—'एकैकहानिः' शेषे 'दुदुगे य' त्ति द्विके द्विके च द्विके चतुष्के च, चकारौ समुच्चयार्थौ। इदमत्रैदम्पर्यम्—भवनपत्यादीशानान्तानां देवानां सप्त हस्ताः शरीरप्रमाणम्। सनत्कुमारमाहेन्द्रयो षट्। ब्रह्मलोकलान्तकयोः पञ्च। शुक्रसहस्रारयोश्चत्वारः। आनतप्राणतारणाच्युतेषु देवानां त्रयो हस्ताः शरीरप्रमाणमिति ॥ २९६ ॥

गेविज्जेसु दोरयणी, एक्का रयणी अणुत्तरेसु च ।
भवधारणिज्ज एसा, उक्कोसा होइ णायव्वा ॥ २९६ ॥

ग्रैवेयकेषु द्वौ रत्नी । एको रत्निः किंभूतश्चास्य भगवान्, 'अनुत्तरेषु च' विजयादिषु पुनः 'भवधारणीया' भवं यावद्धार्यते या सा तथा न पुनरुत्तरवैक्रियेति भावः, 'एषा' सप्तहस्तादिका उत्कृष्टा भवति ज्ञातव्या । जघन्या तु सर्वेषामप्यङ्गुलासंख्येयभागमाना उत्पत्तिकाले लभ्यते । यदा तु भवनपत्यादयोऽच्युतान्ता देवा उत्तरवैक्रियं शरीरमारभन्ते तदा तदङ्गुलसंख्येयभागं जघन्यतः, उत्कृष्टतो योजनलक्षप्रमाणं भवति। ग्रैवेयकानुत्तरसुराणामुत्तरवैक्रियशरीराभावाद्भवधारणीयमेव शरीरं भवतीति ॥ २९६ ॥ अथैनामप्यविशेषोक्तामवगाहनां सौधर्मादिष्वनुत्तरपर्यन्तेषु सागरोपमवृद्धिक्रमेण हीनां हीनतरां च दर्शयितुं गाथाष्टकेन करणमाह—

कप्पाओ कप्पम्मि उ, जस्स ठिई सागरोवमविसिट्ठा ।
उस्सेहो तस्स हवे, एक्कारसभागपरिहीणो ॥ २९७ ॥

'कल्पात्' सौधर्मेशानद्वयादिलक्षणात्तस्मात्, 'कल्पे' सनत्कुमारमाहेन्द्रादिलक्षणे 'यस्य' देवस्य स्थितिः 'सागरोपमविशिष्टा' पूर्वकल्पसागरोपमेभ्यो यावद्भिः सागरोपमैरधिका 'उत्सेधः' शरीरप्रमाणं 'तस्य' देवस्य भवेत् 'एकादशभागपरिहीणः' एकादशभागीकृतस्य हस्तस्य सप्तादिभिर्भागैरेकोत्तरवृद्धैस्तावत्स्थानगतैर्वक्ष्यमाणक्रमेण परिहीण इति ॥ २९७ ॥ एतदेव किञ्चिद् व्याचिख्यासुराह—

कप्पादो कप्पम्मि उ, सोहम्माओ सणंकुमारादी ।
उक्कोसठितिविसेसो, स विसिट्ठा सागरब्भहिया ॥२९८ ॥

'कल्पात्कल्पे' इति कोऽर्थः ? सौधर्मादि 'सणकुमाराई' त्ति सनत्कुमारादौ कल्पे, किमुक्तं भवति ? सौधर्मेशानकल्पद्वयात्सनत्कुमारमाहेन्द्रकल्पद्वये ततोऽपि ब्रह्मलोकलान्तकयोस्ततोऽपि शुक्रसहस्रारयोस्ततोऽप्यानतादिकल्पचतुष्टये तस्मादपि ग्रैवेयकनवके ततोऽप्यनुत्तरविमानेषु, किम् ? इत्याह—'उत्कृष्टस्थितिविशे(शे)ष' उत्कृष्टयो स्थित्योर्यो विशे(शे)ष—विवरक 'स' विशे(शे)ष, किम् ? इत्याह—विशिष्टोऽपि ( ष्टेति ) पदैकदेशेऽपि पदसमुदायोपचारात् सागरोपमविशिष्टा (ष्टा), कोऽर्थः ? 'सागराभ्यधिका' या प्राक् स्थितिरुक्ता सोऽभ्यधिकेति ॥२९८॥ उत्कृष्टस्थितिविशे(शे)षपरिज्ञानार्थमुत्कृष्टस्थितीरेव तावदाह—

दो उअहि सत्त चोद्दस, अट्ठारस तह य चेव बावीसा ।
इगतीसा तेत्तीसा, सेसि विसेसो उ हेट्ठुवरिं ॥ २९९ ॥

द्वावुदधी सौधर्मेशानयो, सप्त सनत्कुमारमाहेन्द्रयो, चतुर्दश ब्रह्मलोकलान्तकयो, अष्टादश चैव शुक्रसहस्रारयो, 'तथा च' इति समुच्चये, द्वाविंशतिरानतादिचतुष्टये, एकत्रिंशद् ग्रैवेयकनवके, त्रयस्त्रिंशत्सागरोपमाण्यनुत्तरेषु, 'तेषां' इत्यादिसागरोपमानामुत्कृष्टस्थितिलक्षणानां विशे(शे)षस्तु ' समधिकार्थे' मकाराल्लघुराशेः पात पुनर्विधेय । स च कथं विधेय ? इत्याह—'हेट्ठुवरिं' ति अधस्ताल्लघुराशीनामुपरिष्टाद् बृहत्तरराशीनां न्यासात्कार्यं । (अथात्र २००० ।) न्यासश्चायम्-

| | | | | | | |
|---|---|---|---|---|---|---|
| २ | ७ | १४ | १८ | २२ | ३१ | ३३ |
| १५० | २ | ७ | १४ | १८ | २२ | ३१ |

॥ २९९ ॥ एवंस्थिते यत्कार्यं तदाह—

इच्छियकप्पठिईए, जो उ विसेसो तओ गहेऊण ।
एग भागे काउ, एक्कारस छेय एक्कार ॥ ३०० ॥

ईप्सितकल्पस्थित्योर्द्वयोर्द्वयोरुत्कृष्टयोः ‘ यः ’ कश्चित् ‘ तुः ’ पूरणे ‘विशे(श्ले)षः’ पञ्चकादिलक्षणो राशिः तस्माद् गृहीत्वा ‘एकं’ रूपं तत्र ‘भागान्’ अंशान् कृत्वा एकादश अत्र च छेदः ‘एक्कारं’ ति एकादशलक्षणः स्थाप्य इति ॥ २०० ॥ ततः किं कुर्यात् ? इत्याह—

तं एगूणं सोहिय, विसेसरासिं तु तेहिं भागेहिं ।
एसा आदी सोज्झा, एक्कारसअंसमज्झाओ ॥ २०१ ॥

तं विशे(श्ले)षराशिमित्युत्तरेण योगः, ‘एकोनं’ एकेनोनीकृतं सन्तं प्राप्तचतुष्ककादिरूपमित्यर्थः ‘शोधयित्वा’ अपनीय ‘विशे(श्ले)षराशिं’ उक्तरूपं, ‘तुः’ एवकारार्थो भिन्नक्रमश्च, केभ्यः सकाशाच्छोधयित्वा ? इत्याह—‘तेभ्य एव’ एकादशसंख्येभ्यो भागेभ्यः, ततः किं कृत्यम् ? इत्याह— ‘एस’त्ति एष विशे(श्ले)षराश्यपनयनेन संपन्नो राशिः सप्तकादि (:‘आदिः’) आदिनामा ‘शोध्यः’ अपनेयः, कुतः ? इत्याह—‘ एकादशांशमध्यात् ’ सामर्थ्याद् द्वितीयस्थानव्यवस्थापितेभ्य एकादशभ्योंऽशेभ्यः सकाशादिति ॥ २०१ ॥ ततः—

सेसेण गुणं(णे) छेयं, छेयंसोवट्टणं करेऊणं ।
सेसेण समं गच्छं, ठावय एगादि एगहियं ॥ २०२ ॥

‘ शेषेण ’ एकोनीकृतविशे(श्ले)षराशिना चतुष्कादिनेत्यर्थः ‘गुणयेत्’ ताडयेत् ‘छेदं’ आदिशुद्धौ सत्यां योऽवशिष्टो राशिस्तस्य संबन्धिनमेकादशलक्षणम्, ततस्तुल्येन राशिना भागं दत्त्वा छेदांशयोर्यल्लघूकरणं तच्छेदांशापवर्तनं तत् ‘ कृत्वा ’ विधाय ततः ‘शेषेण’ अनन्तरोक्तस्वरूपेण ‘समं’ तुल्यं ‘ गच्छं ’ अनन्तरमेवोपपादितमेकैकादशभागलक्षणं सच्छेदमेव ‘ स्थापय ’, न्यस्य प्राग्निरूपितादिसंज्ञराशेरनन्तरमेव, कीदृशम् ?

इत्याह—[ 'एकादि' ] एक आदिः—प्रथमो यस्य स तथा तम्, पुनः कीदृशम्? इत्याह—'एकाधिकं' एकेनाधिकमिति ॥ २०२ ॥ ततोऽपि किं कार्यम्? इत्याह—

तं आइसजुत्तं, हिट्ठिमरयणीओ गच्छठाणसमा ।
ठावेत्तु घेत्तुमेगं, एक्कारसभाग काउमहं ॥ २०३ ॥

'तं' एकाद्यधिकतया स्थापितं गच्छराशिं आदिना—आदौ स्थापितेनैव राशिना संयुक्तं—समेतं कुर्यात्। तथा 'अधस्तनरत्नीन्' प्राग्देवलोकदेहप्रमाणहस्तान् मतान्विवक्षितान्, कथंभूतान्? इत्याह—'गच्छस्थानसमान्' प्राग्विन्यस्तशोधयिष्यमाणराशिस्थानप्रमाणान् तदुपरिष्टादेव 'स्थापयित्वा' तासु स्थानेषु विन्यस्येत्यर्थः, ततो गृहीत्वा एकं रत्निं तेभ्य एव रत्निभ्य एकादशभागान् कृत्वा 'अथ' इति तेभ्य एव रत्निभ्योऽधस्तात्स्थापयेति ॥ २०३ ॥ ततोऽपि किम्? इत्याह—

आइल्लसहियं सोहं, एक्कारसहिएसु (हिंतु) तत्थ य सेसं ।
स सेसरयणीसहियं, अहिअमहियतणुस्सयं जाण ॥ २०४ ॥

आदिना—प्रागुक्तस्वरूपेण सहितं—गच्छस्थानसमं स्थापितं 'शोधयेत्' अपनयेत्। प्राक्तनेभ्य एकादशभागेभ्यस्तत्र शुद्धे यच्छेषं तत् 'शेषरत्निसहितं' उद्धरितहस्तसमन्वितं 'अधिकाधिकाऽतरोच्छ्रयं' अधिकाधिकेषु—पूर्वपूर्वकल्पस्थितेर्द्व्यादिसागरोपमलक्षणाया एकादिक्रमेण वृद्धिमुपागतेष्वतरेषु—सागरोपमेषूच्छ्रयं देहगतं जानीहि ॥ २०४ ॥ अयमस्य गाथाष्टकस्य भावार्थः—

सौधर्मेशानकल्पद्वयस्थितेर्द्विसागरोपमरूपाया सनत्कुमारमाहेन्द्रकल्पद्वयस्थितेश्च सप्तसागरोपमरूपाया विश्ले(श्ले)षे पञ्च, तेभ्यश्चैकस्मिन्

रूपे गृहीते शेषाश्चत्वारः, ते च शेषशब्दवाच्या भवन्ति । यत्तु तदेकं रूपं गृहीतं तदेकादशभिर्भागैः क्रियते अधस्ताच्छेदश्चैकादशरूपः, स्थापना चेयम्—$\frac{11}{11}$ । द्वितीयेऽपि स्थानेऽयमेव राशिर्ध्रियते, यथा $\frac{11}{11}$ । ततश्च प्रथमराशेः सकाशात् शेषराशिश्चतुष्कलक्षणो विशोध्यते, शोधिते जाताः सप्तैकादशभागाः $\frac{7}{11}$, तेषां चादौ स्थाप्यमानत्वादादिरिति संज्ञा । ते चादिसंज्ञाः सप्तैकादशभागा द्वितीयराशेः शोध्यन्ते, शुद्धेषु जाताश्चत्वार एकादशभागाः, ते चामी $\frac{4}{11}$ । एषां च च्छेद एकादशलक्षणः शेषराशिना चतुष्करूपेण गुणितो जातश्चतुश्चत्वारिंशत्संख्यः $\frac{4}{44}$, ततस्तुल्येन चतुष्कराशिना छेदांशयोरपवर्तनं क्रियते, कृते च जात एक एकादशभागः, यथा $\frac{1}{11}$, एवं च कृते प्राग्निरूपितादिराशेरनन्तरमेनमेव राशिमेकाद्येकाधिकतया शेषसमं सच्छेदमेव स्थापयेत् । यथा—

| | | | |
|---|---|---|---|
| ० १ | ३ | ४ | ११ |
| ११ ११ | ११ ११ | ११ | |

तत एनमेव राशिमादिसंयुतं कुर्यात्, तत्रादिः सप्तैकादशभागाः, ते चैकादिषु क्षिप्ताः, ततो जातमिदम्—

| | | | | |
|---|---|---|---|---|
| ७ | ८ | ९ | १० | ११ |
| ११ | ११ ११ | ११ | ११,११ | |

तदन्वधस्तनकल्पहस्तान् मतप्रमाणान् पञ्चलक्षणगच्छसमान् अस्यैव राशेरुपरि स्थापयेत्, एतेभ्यश्च प्रत्येकमेकं गृहीत्वा एकादशभागीकृत्यैतदधस्तादेव स्थापयेत् । स्थापना चेयम्—

| | | | | |
|---|---|---|---|---|
| ९ | ९ | ९ | ९ | ९ |
| ११ | ११ | ११ | ११ | ११ |
| ७ | ८ | ९ | १० | ११ |
| ११ | ११ | ११ | ११ | ११ |

अत्र च प्रथमेभ्य एकादशभागेभ्य आदिः सप्तैकादशभागलक्षणः शोध्यते, ततो द्वितीयादिस्थानस्थेभ्यस्तेभ्य एव यथाक्रममष्टौ नव दशैकादशरूपा एकादशभागाः शोध्यन्ते, शोधिते यत्स्थितं तत्सनत्कुमारमाहेन्द्रयोर्येषां देवानां त्रीणि सागरोपमाणि स्थितिस्तेषां षड् हस्ताश्चत्वारश्चैकादशभागाः शरीरप्रमाणं भवति । एवमेकैकसागरोपमवृद्धौ एकैकभागहान्या ताव-

शेषं यावत्सप्तसागरोपमस्थितीनां देवानां षड्हस्तः शरीरोच्छ्रयो भवतीति । स्थापना— अथ करणलब्धामेव भागहानिं कण्ठत एव प्रतिपिपादयिषुर्गाथाद्वयमाह—

| | | | | | |
|---|---|---|---|---|---|
| सागरो० | १ | ४ | ५ | ६ | ७ |
| हस्ता० | ६ | ६ | ६ | ६ | ६ |
| भागा | ४ | ३ | २ | १ | ० |
| हानि० | ११ | ११ | ११ | ११ | ० |

अयरोवमाइ जेसिं, दोण्णि ठिई तेसि सत्त रयणीओ ।
सत्तेकारसभागा, रयणीए हाणि तइयम्मि ॥ २०५ ॥
अट्ठ चउत्थे नव चेव, पंचमे हाणि दस य छट्ठम्मि ।
छ चेव य रयणीओ, पुण्णाओ सत्तमे अयरं ॥ २०६ ॥

'अतरोपमे' सागरोपमे 'येषां' देवानां 'द्वे' द्विप्रमाणे 'स्थिति' आयुष्कालस्तेषां सप्त 'रत्नयः' हस्ता देहोच्छ्रयः । अयमभिप्रायः—पल्योपमादारभ्य यावद्द्विसागरोपमस्थितिकालः पूर्यते तावत्सप्तैव हस्ता देहमानम् । सप्तैकादशभागाः 'रत्नेः' हस्तस्यैकादशभागीकृतस्य हानिः क्रियते तृतीये सागरोपमे, सागरोपमत्रयायुष्काणां देवानां षड् हस्ताश्चत्वारश्चैकादशभागा देहमानमित्यर्थः ॥ २०५ ॥ अष्टैकादशभागाश्चतुर्थे सागरोपमे नव चैव पञ्चमे हानिर्दश च षष्ठे सागरोपमे षट् चैव च रत्नयः पूर्णाः सप्तमेऽतर इति ॥ २०६ ॥

यदा तु ब्रह्मलोकलान्तकयोर्देवदेहमानं जिज्ञास्यते तदा सप्तानां चतुर्दशानां च सागरोपमाणामुत्कृष्टस्थितिरूपाणां विश्ले(श्ले)षो विधीयते, स च सप्त सागरोपमाणि, तस्मादेकं रूपं गृह्यतेऽवशिष्टाः षट्, तत्र रूपमेकादशभिर्भागैर्विभज्यते तदधश्चैकादशच्छेदः । अयं च राशिर्द्विधा स्थाप्यते, यथा—

| | |
|---|---|
| ११ | ११ |
| ११ | ११ |

तत्र षड्रूपो यः क्षेपराशिः स प्रथमादेकादशराशेः पात्यते ऽवशिष्टाः पञ्चैकादशभागाः रत्नेः, एते

चादिसंज्ञा द्वितीयादेकादशांशराशेः पात्यन्ते, अत्र पुनरवशिष्टाः षडेकादशभागाः $\frac{६}{११}$, ततोऽस्य राशेश्छेद एकादशलक्षणः शेषेण षट्करूपेण गुण्यते, ततो जाता षट्षष्टिः $\frac{६}{६६}$, अनयोश्छेदांशयोः षट्केनापवर्तनं क्रियते ततो लब्ध एकादशभागः, तत आदेरनन्तरमेव शेषेण षट्कलक्षणेन सममेकाद्येकोत्तरममुमेव राशिं स्थापयेत्। स्थापना चेयम्—

| | | | | | | |
|---|---|---|---|---|---|---|
| ५ | १ | २ | ३ | ४ | ५ | ६ |
| ११ | ११ | ११ | ११ | ११ | ११ | ११ |

ततः पूर्ववदादिसहितं स्थापयेत्। यथा—

| | | | | | | |
|---|---|---|---|---|---|---|
| ५ | ६ | ७ | ८ | ९ | १० | ११ |
| ११ | ११ | ११ | ११ | ११ | ११ | ११ |

अधस्तनकल्पहस्ताश्चात्र षट्, ते गच्छस्थानसमाः स्थाप्यन्ते, गच्छश्च सप्तरूपः, तेभ्यश्च हस्तेभ्य एको हस्तो गृह्यते, स चैकादशभागीक्रियते, तदनु सप्तसु स्थानेषु स्थाप्यते । स्थापना चेयम्—

| | | | | | | |
|---|---|---|---|---|---|---|
| ५ | ५ | ५ | ५ | ५ | ५ | ५ |
| ११ | ११ | ११ | ११ | ११ | ११ | ११ |
| ५ | ६ | ७ | ८ | ९ | १० | ११ |
| ११ | ११ | ११ | ११ | ११ | ११ | ११ |

तदनु प्राग्निरूपितादिराशिः पञ्चैकादशभागरूपः प्रथमैकादशस्थानात्पात्यते, अन्ये च षडादय एकादशान्ता आदिराशिमिश्रणया ये पूर्वं षड् राशय उत्पादितास्तान् द्वितीयाद्येकादशस्थानेभ्यो यथाक्रमं पातयेत्, ततो यत्तत्रावशिष्यते तत्प्रमाणैकादशांशसमन्विताः पञ्च हस्ता अष्टादिचतुर्दशान्तसागरोपमस्थितीनां देवानां यथाक्रमं शरीरप्रमाणं भवति । स्थापना चेयम्—

| सागरो० | ८ | ९ | १० | ११ | १२ | १३ | १४ |
|---|---|---|---|---|---|---|---|
| हस्ताः | ५ | ५ | ५ | ५ | ५ | ५ | ५ |
| अंशाः | ६ | ५ | ४ | ३ | २ | १ | ० |
| छेदाः | ११ | ११ | ११ | ११ | ११ | ११ | ० |

एवं चतुर्दशाष्टादशादिसागरोपमलक्षणयोरुत्कृष्टस्थित्योश्चतुष्टयादिलक्षणं विशे(श्ले)षं प्रतीत्य "इच्छियकप्पठिईणं" (गाथा २००)

इत्यादि करणरीतिर्गणितकुशलेनाभ्यूह्य स्वयमेवानुवर्त्तनीया, विस्तरभयाच्च न लिखितेति ॥ अथ सौधर्मेशानकल्पगमेव वक्तव्यान्तरमाह—

पागारदुवारेसुं, सभासु भवणेसु ज परीमाणं ।
ज होइ चमरचचाएँ तं तु बलीयसहाए ॥ २०७ ॥

प्राकारश्च द्वाराणि च प्राकारद्वाराणि तेषु प्राकारद्वारेषु ' सभासु ' सुधर्मासु ' भवनेषु ' विमानमध्यप्रासादलक्षणेषु विषये किं प्रमाणमुच्चत्वाद्यपेक्षया वर्त्तते ? इति शिष्येण पृष्टे सूरिराह—यत्परीमाणं भवति ' चमरचञ्चाया ' चमरनामासुरेन्द्रराजधान्या यत्तु ' वैरोचनसभाया ' विशेषेण रोचते शोभत इति विरोचन स एव वैरोचन स चेह बलिनामा असुरेन्द्रस्तस्य सभा—निवासो निलय इत्येकोऽर्थः, ततो बलिचञ्चाया राजधान्यामित्यर्थः ॥ १०७ ॥ तत् किम् ? इत्याह—

त दुगुणं नायव्वं, सोहम्मीसाणकप्पवासीणं ।
दो दो बारसहस्सा, एक्केकाए य बाहाए ॥ २०८ ॥

'तत्' प्राकारादिप्रमाणं चमरचञ्चाबलिचञ्चयो सबन्धि [ द्विगुणं ] ' ज्ञातव्य ' बोद्धव्य सौधर्मेशानकल्पवासिनां प्राकारद्वारादीनाम् । तथा द्वे द्वे द्वारसहस्रे एकैकस्यां तु ' बाहायां ' तथाविधप्राकारभित्तिभागलक्षणायाम् । यत्पुनरत्रैव प्रागभिहितं " सव्वे वट्टविमाणा एगदुवारा भवंति " ( गाथा २४८ ) इत्यादि तदावलिकाप्रविष्टविमानान्येवाश्रित्योक्तमिति मन्यामहे, इदं पुनरावलिकाबाह्यविमानापेक्षयेति ॥ तत्र सर्वविमानेषु प्राकारस्योच्चत्वं त्रीणि योजनशतानि, विस्तारो मूले योजनशतं, मध्ये पञ्चाशत्, सर्वोपरि पञ्चविंशतिः । किमुक्त भवति ?—मूले विस्तीर्णः, मध्ये संक्षिप्तः, उपरि तु तनुतरो गोपुच्छसंस्थानसं-

स्थितः सर्वकनकमयः। स चानेकैः पञ्चवर्णैः कपिशीर्षकैर्योजनायामै-रर्द्धयोजनविस्तृतैः किञ्चिदूनयोजनोच्छ्रितैर्मणिमयैरुपशोभितः। तस्य चैकैकस्यां बाहायामेकैकं द्वारसहस्रं भवति। तानि च द्वाराणि पञ्चयोजनशतोच्छ्रितानि अर्द्धतृतीययोजनशतविस्तृतानि तावत्प्रमाणप्रवेशानि रत्नकनकमयानि। विमानमध्यभागवर्तिवक्ष्यमाणलक्षणा उपकारिकलयनोपरिप्रासादा पूर्वोत्तरस्यां दिशि योजनशतायामा पञ्चाशद्योजनविस्तृता योजनसप्तत्युच्चा सभा सुधर्माख्या (ख्या) भवति। उपकारिकलयनमध्ये च मूलप्रासादः पञ्चयोजनशतोच्चः, अर्द्धतृतीययोजनशतविस्तृतः। एतत्सर्वं राजप्रसेनजिदुपाङ्गे[1] साक्षादेवोपलभ्यते। एतदर्द्धं च सर्वत्र चमरबलिचञ्चयोर्वाच्यम्। प्रस्तुतसूत्रोक्तं द्वारप्रमाणं महत्तद्यलक्षणं मतान्तरसंभाव्यतमिति (मतान्तरं संभावितव्यमिति) ॥२०८॥ तथा—

सोहम्मे ईसाणे, बोधव्वा ओवगारिया लेणा (णा)।

एगं तु सयसहस्सा, विक्खंभायामओ भणियं (या) ॥२०९॥

सौधर्मे ईशाने बोद्धव्यानि 'औपकारिकानि' मूलप्रासादोपकारप्रयोजनानि लयनानि, किम्? इत्याह—'एकं तु' एकमेव शतसहस्रं 'विष्कम्भायामतः' विष्कम्भेनायामेन च प्रमणितानि तीर्थंकरगणधरादिभिः। उच्छ्रयश्चतेषां योजनप्रमाणः शास्त्रान्तरोक्तो द्रष्टव्यः। एतानि च किलोपकारिकलयनानि देवकुलपीठबन्धवन्मूलप्रासादपीठरूपाणि बोद्धव्यानि। तदुपरि मूलप्रासादाः पञ्चयोजनशतोच्छ्र्याः, तदनु च चतुर्दिशि तत्परिवारभूताश्चत्वारः, तेषामपि पूर्वक्रमेणैव चत्वारश्चत्वार इति षोडश, एषामपि प्रत्येकं प्रत्येकं चत्वार इति चतुःषष्टिः।

१ राजप्रश्नीयोपाङ्गे इत्यर्थः।

पर मूलप्रासादापेक्षया अर्धार्धप्रमाणा आयामविष्कम्भोच्चत्वे द्रष्टव्या ॥ २०९ ॥ अथ कल्पेष्वेव वक्तव्यान्तरसूचिकां द्वारगाथामाह—

कप्पाण पइट्ठाणं, संठाणविमाणबाहल्लं च ।
सलेसविन्थरा वि य, वण्णो माणं य गंधे य ॥२१०॥

‘कप्पाणं’ सौधर्मादिकल्पानां प्रतिष्ठन्ति—प्रतिष्ठां लभन्ते विमानान्यस्मिन्निति ‘प्रतिष्ठानं’ घनोदध्यादि तत्स्वरूपतो वाच्यम् । तथा ‘संस्थानविमानबाहल्यं च’ तत्र संस्थानं वृत्तादि, विमानानि विष्कम्भतः परिक्षेपतश्च, बाहा—स्वन्तादिपर्यन्तबाधा—आयाम इत्यर्थः, तस्य विमानानां सर्वपीठानां चोच्चभावो वक्तव्य । तथा संख्यात-विस्तरा अपि चेतिशब्दादसंख्यातविस्तराश्च । तथा ‘वर्णं’ शुक्लादि ‘मानं’ प्रतिष्ठानबाहल्यविमानोच्चत्वसंयोगमानं ‘च’ समुच्चये ‘गन्धं’ घ्राणेन्द्रियग्राह्यो गुणः, सर्वज्ञात्स्पर्शांश्च वक्तव्य इति ॥ २१० ॥
साम्प्रतमेतान्येव द्वाराणि व्याचिख्यासुर्गाथाद्वयमाह—

घणउदहिपइट्ठाणा, दोसाहिट्ठेसु तिसु य घणवाओ ।
तीसु य तदुभयम्मी, आगासपइट्ठिया सेसा ॥ २११ ॥

घन—निबिड स चासावुदधिश्च—उदकराशिर्घनोदधिः प्रतिष्ठान—आधारलक्षणं येषां ते घनोदधिप्रतिष्ठाना विमाना द्वयोरादिमयोः कल्पयोः । तथा ‘त्रिषु च’ सनत्कुमारमाहेन्द्रब्रह्मलोकलक्षणेषु पुनः ‘घनवात’ घनवातप्रतिष्ठिता विमाना इत्यर्थः । ‘तीसु य’ त्ति त्रिषु लान्तक-शुक्रसहस्रारेषु पुनः ‘तदुभये’ घनोदधिघनवातलक्षणे विमाना वर्तन्ते। ‘आकाशप्रतिष्ठिताः’ शुद्धाकाशलक्षणप्रतिष्ठाना ‘शेषा’ आरणादि-देवलोकविमाना भवन्तीति । उक्तञ्च—“घणउदहिपइट्ठाणा, सुरभवणा

होंति दोसु कप्पेसु । तिसु वायपइट्ठाणा, तदुभयसु पइट्ठिया तीसु ॥ १ ॥ तेण परं उवरिमया, आगासंतरपइट्ठिया सव्वे । एस पइट्ठाण-विही, उड्ढंलोए विमाणाणं ॥ २ ॥" इति ॥ ३११ ॥

ननु तिष्ठत्ता(तिष्टतु ता)वत्सांप्रतं प्रस्तावप्राप्तमपि संस्थानद्वारम्, एतद्वयं ज्ञातुमिच्छामः—किमेतान्यावलिकाप्रविष्टानि विमानानि पुष्पावकीर्णानि च सर्वदेवावासेषु भवन्ति ? उतास्ति कश्चिद्विशेष इति ?, अत्रोच्यते—

आवलियपविट्ठा बाहिरा य जा उवरिमा उ गेवेज्जा ।
आवलियपविट्ठा नेवऽणुत्तरा जे विमाणवरा ॥ ३१२ ॥

'आवलिकाप्रविष्टा बाह्याश्च' प्रतीतरूपा एव विमानाः, किम ? इत्याह—यावदुपरिमाणि 'तुः' पूरणार्थः ग्रैवेयकाणि, सौधर्मेशानाभ्यामारभ्य यावदुपरिमाणि ग्रैवेयकाणि तावत्सर्वदेवलोकेष्वावलिकाप्रविष्टानि तदितराणि च विमानानि सन्तीति भावः । एतच्च प्रायो व्यवहारापेक्षमेव, यतोऽधस्तनग्रैवेयकत्रिके आवलिकाप्रविष्टान्येव विमानानि सन्तीति । आवलिकाप्रविष्टाश्चैव 'अणुत्तराः' न विद्यन्ते उत्तराणि–[ प्रधानानि ] वर्णगन्धरसस्पर्शादिभिर्गुणैर्विमानानि येभ्यस्ते तथा 'ये' इति समयप्रसिद्धाः, अत एवाह—'विमानवराः' प्रधानविमानाः सर्वार्थसिद्धप्रस्तटविमाना इति भावः ॥ ३१२ ॥ उक्तमपि प्राक् सर्वविमानसंस्थानं द्वारगाथोपन्यस्तसंस्थानद्वारानुरोधेनाह—

तत्थावलियपविट्ठा, वट्टा तंसा तहेव चउरंसा ।
पुप्फावकिण्णगा पुण, अणेगविहरूवसंठाणा ॥ ३१३ ॥

व्याख्यातार्थैवेयं गाथा । एतद्वारोपन्यासः किमर्थमिह ? इति चेत,

उच्यते—विस्मृतिशीलशिष्यसंस्मरणार्थमिति ॥ २१३ ॥ अथ विमाना-याधाद्वारे युगपदेवाह—

विक्कमपरिक्खेवे, उवमा देवेहिं होइ कायव्वा ।
जीवा य पुग्गला चक्कमंति ते सासयविमाणा ॥ २१४ ॥

विष्कम्भेण युक्तः परिक्षेपो विष्कम्भपरिक्षेपः—विष्कम्भोपलक्षित सबाह्याभ्यन्तरः परिधिरित्यर्थः, तत्र वाच्ये ' उपमा ' उपमानं ' देवैः ' तथाविधचण्डादिगतिचतुष्टयप्रवृत्तैर्भवति कर्तव्या । सा च संग्रहणि-गाथानुसारेण विज्ञेया—" सीयालीससहस्सा, दो य सया जोयणाण तेसट्ठा । इगवीस सट्ठिभागा, कक्क(क्ख)डमाइम्मि पेच्छ नरा ॥ १ ॥ [ अङ्कतोपि ४७२६३ २१/६० ] एय दुगुणं काउं, गुणिज्जए तिपणसत्त-नवएहिं । आगयफलं तु जं तं, कमपरिमाणं वियाणाहि ॥ २ ॥ दो लक्खजोयणाणं, तेसीई सहस्स पंच सय असिया । छ च्चेव सट्ठिभागा, तिहिं गुणिए होंति नायव्वा ॥ ३ ॥ " अङ्कतोऽपि २८३५८० ६/६०, अयं चण्डायाः क्रमः । " पणगुणे चउलक्खा, सहस्स बावत्तरी य छ च्च सया । तेत्तीस जोयणाइं, अण्णा तीसं कलाओ य ॥ १ ॥ " ४७२६३३ ३०/६०, अयं चपलायाः क्रमः । " छ लक्खिसगसट्ठि-सहस्सा, छ च्च सया जोयणाण छासीया । चउपण्णा य कलाओ, सत्तहिं गुणिए वियाणाहि ॥१॥ " ६६१६८६ ५४/६०, अथ जवनायाः क्रमः । " लक्खट्ठ सहस्सा वि य, पण्णास गुणिए नवहिं जाणेज्जा । सत्त सया चत्ताला, अट्ठारस चेव कलाओ य ॥ १ ॥ " ८५०७४० १८/६०, अथ वेगाया क्रमः । " एय कमपरिमाणं, अहाइ छम्मासियं तु कालम्स । आयामपरिहिविक्खंभ, देवगईहिं मिणेज्जाहि ॥१॥ " ' कम-

परिमाणं ' ति " क्रमू पादविक्षेपे " इति वचनात् क्रमः—पादविक्षे-पलक्षणस्तस्य परिमाणं भवति, इदं क्षेत्रतः क्रमपरिमाणम् । कालतस्तु—' अहाइ छम्मासियं तु कालस्स ' त्ति दिवसमादिं कृत्वा षण्मासं यावदनेन क्रमेण गमनं तत् षाण्मासिकं क्रमपरिमाणं कालतो भवति । 'आयामपरिहिवित्थर' त्ति आयामः—दैर्घ्यं परिधिः—परिक्षेपः विस्तारः—विष्कम्भस्तान् यथासंभवं ' देवगतिभिः ' चण्डादिकाभिः पूर्वोक्तक्रम-परिमाणयुक्ताभिर्मिमीत इति संबन्धः । " चंडाए विक्कंभो, चवलाए तह य होइ आयामो । अब्भिंतर जवणाए, बाहिरपरिही उ वेगाए ॥ १ ॥ " मातव्या इति क्रियायोगः । " चत्तारि वि सक्कमेहिं, चंडा-इगईहिं जंति छम्मासं । तह वि न वि जंति पारं, केसिंचि सुर विमाणाणं ॥ १ ॥" अत्र चाभ्यन्तरपरिधिर्विमानप्राकारमध्यभागमपेक्ष्य बाह्यपरिधिस्तु विमानपर्यन्तमपेक्ष्य मन्तव्य इति ॥ तथा 'जीवाः' एकेन्द्रियाः पृथिवीकायिकरूपाः चकारस्य व्यवहितसंबन्धात् 'पुद्गलाश्च' औदारिकादिवर्गणारूपाः ' व्युत्क्रामन्ति ' निरन्तरं विमानतयोत्पद्यन्ते, उपलक्षणाच्च्यवन्ते न तु विमानाकारः । यत एवं ततस्तानि शाश्वतानि विमानानि द्रव्यरूपतया वर्तन्त इति ॥ ३१४ ॥ अथोच्चत्वद्वारं गाथाद्वयेनाह—

सोहम्मे ईसाणे, उच्चत्तं पंच जोयणसयाइं ।
सेसाण वि सव्वेसिं, सयपरिवड्ढीए नेयव्वं ॥ ३१५ ॥

'सौधर्मे ईशाने' सौधर्मेशानयोः कल्पयोरित्यर्थः, उच्चत्वं विमा-नमध्यवर्तिप्रधानप्रासादानां पञ्च योजनशतानि । शेषाणामपि कल्पानां सर्वेषां शतपरिवृद्ध्योच्चत्वं नेतव्यमिति ॥ ३१६ ॥

पढमेसु पंचवरणा, एक्कगहाणी उ जा सहस्सारो ।
दो दो कप्पा तुल्ला, तेण परं पोंडरीयाइं ॥ २१८ ॥

प्रथमयोर्द्वयोर्देवलोकयोः पञ्च—कृष्णनीलरक्तलोहितशुक्ललक्षणाः वर्णाः—चक्षुरिन्द्रियग्राह्या गुणविशेषा येषां ते पञ्चवर्णा विमाना वर्तन्ते । तदुपरि का वार्त्ता? इत्याह—'एकैकहानिस्तु' एकैकवर्णहानिः पुनर्वक्तव्या, कियद्दूरं यावद्? इत्याह—यावत् 'सहस्रारः' अष्टमः कल्पः, आह किं प्रतिकल्पमेकैकवर्णहानिः? उत कथञ्चिदन्यथा ?, अन्यथेति ब्रूमः । कुतः? यतः—'द्वौ द्वौ' सनत्कुमारमाहेन्द्रादिलक्षणौ 'तुल्यौ' सदृशवर्णतया समानौ कल्पौ वर्त्तेते । एतदुक्तं भवति—सनत्कुमारमाहेन्द्रयोश्चतुर्वर्णाः, ब्रह्मलोकलान्तकयोस्त्रिवर्णाः, शुक्रसहस्रारयोर्द्विवर्णा विमाना भवन्ति । तदुपरि विधिमाह—'तेन' इति ततः—सहस्रारात् 'परं' अग्रत आनतप्रभृतिसर्वार्थसिद्धपर्यन्तानि 'पुण्डरीकाणि' धवलानि शङ्खेन्दुकुन्दतुषारहारसमवर्णानीति भावः ॥ २१८ ॥ संप्रति मानद्वारम्—

होइ पमाणं सव्वेसु चेव बत्तीस जोयणसयाइं ।
सोहम्मादीयाणं, बाहल्लुच्चत्तसहियाणं ॥ २१९ ॥

भवति प्रमाणं सर्वेषु चैव विमानेषु द्वात्रिंशद्योजनशतानि, केषाम्? इत्याह—'सौधर्मादीनां' [ सौधर्म ] देवलोकादीनां 'बाहल्योच्चत्वसहितानां' योजितपीठबाहल्यप्रसादोच्छ्रयाणामिति ॥ २१९ ॥ इदानीं गन्धद्वारं चशब्दाक्षिप्त ( मानि ) द्वारान्तराणि चाह—

१ अत्र "लोहित" स्थाने "हारिद्र" इति भाव्यम् ।

अच्चन्तसुरहिगंधा, फासे नवणीयमउयसुहफासा ।
निच्चुज्जोया रम्मा, सयंपभा ते विरायंति ॥ २२० ॥

अत्यन्त—अतिशयेन सुरभिः—सुगन्धघनसारागुरुप्रभृतिसुगन्धिद्रव्य-कर्पूरोपमानो गन्धो येषां तेऽत्यन्तसुरभिगन्धाः, 'स्पर्शे' स्पर्शविषये नवनीतवन्मृदुकः शुभः स्पर्शो येषां ते नवनीतमृदुकशुभस्पर्शाः, तथा 'नित्योद्द्योताः' सदाप्रकाशादिनिश्चयनिरन्तरस्फुरत्सारतेजःपुञ्जप्रकाशितदिक्चक्राः, अत एव 'रम्याः' रमणीयाः 'स्वयम्प्रभाः' स्वय—आत्म-नैवान्यनिरपेक्षा प्रभा—प्रभावो येषां ते तथा 'ते' विमाना 'विरा-जन्ते' प्रकाशन्तीति ॥२२०॥ इत्थं विमानस्वरूपगतां द्वारगाथामुप-न्यस्य व्याख्याय चेदानीं तद्गतदेववक्तव्यतामतिवर्त्य द्वारगाथामाह—

उववायपरीमाणं, अवहारुच्चत्तमेव संघयणं ।
संठाणगंधफासे, ऊसासो चेव आहारो ॥ २२१ ॥

उपपातेन सह परीमाणं, कुतो देवा उत्पद्यन्ते ? किंच तेषां परि-माणम् ? इत्येवंलक्षणम् । अपहारश्चोच्चत्वं चापहारोच्चत्वम्, 'एव' समुच्चये । तत्रापहारो नाम वर्तमानसमयदेवलोकदेवानां समयापहारेणा-पहारकालः । 'उच्चत्वं' शरीरप्रमाणम् । 'संहननं' अस्थिसञ्चय-विशेषः । संस्थानं च गन्धश्च स्पर्शश्च संस्थानगन्धस्पर्शाः । उच्छ्वासः 'चेव' इति निपातः(चे)तत्र आहारश्चैव वाच्य इति ॥२२१॥ एना-मेव द्वारगाथां व्याचिख्यासुर्गाथाचतुष्टयमाह—

सोहम्मीसाणेसु, उववाओ अकम्मकम्मभूमीसु ।
पंचिंदियतिरियनरेहिं कम्मभोमेहिं संखाउ ॥ २२२ ॥

सौधर्मेशानयोः कल्पयोः 'उपपातः' उत्पत्तिः कुतः सकाशात्? इत्याह—कर्म—कृष्यादि मोक्षसाधकं वा सम्यग्ज्ञानदर्शनचारित्राराधनरूपं तत्प्रतिषेधादकर्म, कर्म चोक्तलक्षणमेव, ततोऽकर्मणः कर्मणश्च योग्या भूमयोऽकर्मकर्मभूमयः। तत्र त्रिंशद्देवकुर्वादिका अकर्मभूमयः, पञ्चदश भरताद्याः कर्मभूमयः, तासां संबन्धिभ्यः पञ्चेन्द्रियतिर्यग्नरेभ्यः संज्ञितिर्यग्भ्यो नरेभ्यश्चेत्यर्थः। शेषकल्पनिर्द्धारणार्थमाह—कर्मप्रधाना भूमिः—जन्मक्षेत्रं येषां ते कर्मभूमास्तेभ्यः पञ्चेन्द्रियतिर्यग्नरेभ्य एव सकाशादुत्पत्तिः 'शेषाणां' इति विभक्तिव्यत्ययात् शेषेषु—सनत्कुमारादिदेवलोकेष्विति ॥ २२२ ॥ तथापि विशेषमाह—

पंचेंदियतिरियाणं, उववाओ होइ जा सहस्सारो।
सेसाण सुरगणाणं, होइ मणुस्सेहिं उववाओ ॥ २२३ ॥

'पञ्चेन्द्रियतिरश्चां' संज्ञिरूपाणामुपपातो यावद्भवेत् सहस्रारः, सहस्रारं यावदित्यर्थः। 'शेषाणां' आनतप्राणतादिसंबन्धिनां सुरगणानां भवति मनुष्येभ्य उपपात इति ॥ २२३ ॥

संजयमीसगअस्संजयाण उववाओ अच्चुओ जाव।
गेवेज्ज मीसरहिया, तेण परं संजया चेव ॥ २२४ ॥

संयतमिश्रकाऽसंयतानामुपपातः 'अच्युतो यावत्' अच्युतं यावदित्यर्थः। तत्र संयताः—सर्वथा षड्जीवनिकायवधव्यावृत्ताः ब्रह्मचारिणो निगृहीतेन्द्रियकषायाः सम्यक्प्रत्युपेक्षणाद्यनुष्ठानपरायणाः प्रमत्ताद्याः प्राणिविशेषाः। मिश्रकाः—संयमानुष्ठानान्मिश्रभावमापन्ना देशविरता इति यावत्। असंयताः—देशसर्वसंयमशून्या मिथ्यादृष्ट्याद्योऽविरतसम्यग्दृष्टिपर्यन्ताः, परं सम्यग्मिथ्यादृष्टिवर्जा इह गृह्यन्ते,

" न सम्मदिट्ठी कुणइ कालं " इति वचनात् तेषां कश्चिदप्युपपा-तामावात् । ' गेवेज्ज ' इति ग्रैवेयकेषु ' मिश्ररहिता ' असंयता संयताश्चेत्यर्थः । तत्रासंयता ये खलु कलिपूजाप्रसक्ता नैर्ग्रन्थ्य निह्नु-वाना आत्मपरिपूर्णयतियोग्यक्रियाकाण्डा अन्तरङ्गभावशून्यास्त एव गृह्यन्ते । यदुक्तम्—" जे दंसणवावन्ना, लिंगग्गहणं करेंति सामन्ने । तेसिं पि य उववाओ, उक्कोसो जाव गेवेज्जा ॥ १ ॥ " ' तेन परं ' इति तत्र—ग्रैवेयकेभ्योऽग्रे संयता एवोत्पद्यन्ते, नासंयता नापि संयता-संयता इति ॥ २२४ ॥ अथ परिमाणद्वारम्—

उक्कोसेण असंखा, उववज्जंती जहन्नएगो ।
जा सहस्सारो कप्पो, तेण परं जाव संखेज्जा ॥ २२५ ॥

' उत्कर्षेण ' उत्कृष्टत्वा असंख्या ' उपपद्यन्ते ' जायन्ते देवतया तिर्यग्मनुष्या एकसमयेन । जघन्येन ' एकः ' तिर्यगादिः, द्विप्रभृतयस्तु मध्य व्यवहारे । इत्यादि—यावत्सहस्रार कल्प । ' तेन परं ' सहस्रारा-त्कल्पादूर्ध्वं आनतादिषु यावत् संख्येया एवोत्पद्यन्ते, यत संज्ञिमनुष्या-णामेव तत्रोत्पत्तिस्तेषां च मनुष्याणां संख्यातरूपत्वादिति ॥ २२५ ॥ समयापहारद्वारम्—

ओसप्पिणिउस्सप्पिणि, संखाईयाहिँ जा सहस्सारो ।
तेण परं अवहारो, पलियअसंखेज्जभागेण ॥ २२६ ॥

अवसर्पिण्युत्सर्पिणीभिः विभक्तिलोपश्च प्राकृतत्वात्, संख्यातीता-भिरपहार इत्युत्तरेण योगः, यावत्सहस्रारं, प्रतिसमयमपहारेण तत्रोत्प-द्यमानदेवानामपह्रियमाणानामसंख्यातावसर्पिण्युत्सर्पिणीसमयैः स-र्वापहारे भवन्तीति भावः । ' तेन परं ' आनतादिकल्पेष्वपहार

अंगुलभागमसंखो, सुराण ओगाहणा जहण्णा उ ।
सव्वेसु सयसहस्सं, उत्तरवेउव्वि उक्कोसा ॥ २२९ ॥

अङ्गुलभाग 'असङ्ख्य' असङ्ख्येय 'सुराणां' देवानामवगाहना 'जघन्या' सर्वतुच्छा, 'तु' पूर्ववत्, इयं चोत्पत्तिकाले भवति । उत्तरवैक्रियाणां पुनरियमेवान्यथेत्याह—'सर्वेषु' देवस्थानेषु 'शत-सहस्रं' योजनलक्षं यावदुत्तरवैक्रियोत्कृष्टावगाहना भवति । उत्तर-वैक्रियजघन्या त्वङ्गुलसङ्ख्येयभागप्रमाणैव, पर्याप्तत्वेन तस्य तथाविध-जीवप्रदेशसङ्कोचाभावादिति ॥ २२९ ॥ [ अथ संहनन ] द्वारम्—

संघयणेण सुरगणा, असंघयणी महाबला सूरा ।
सोमा महाणुभावा, अणिंदियगुणा विरायंति ॥ २३० ॥

'संहननेन' तथाविधास्थिनिचयरूपेण चिन्त्यमाना 'सुरगणाः' देवसङ्घाताः, किम्? इत्याह—'असंहनिनः' वज्रर्षभनाराचादिसंहनन-विकलाः, वैक्रियशरीरत्वेन तस्य तथाविधास्थिसञ्चयस्य तेष्वभावात्। यत उक्तम्—"नेवऽट्ठी नेव सिरा, देवाण सरीरसंघाए।" 'महाबलाः' महत्येव संहननसाध्यबलातिरेकवन्तः 'शूराः' संग्रामप्रवृत्तसुभटवद्रूप-गर्विताः 'सौम्याः' स्तिमितप्रकृतयः 'महानुभावाः' अचिन्त्यशक्ति-तयाऽशिवाद्युपद्रवप्रशमव्यावृत्तिकराः 'अनिन्दितगुणाः' अगर्हणीय-रूपलावण्यादिगुणग्रामवन्तः सन्तः 'विराजन्ते' प्रभवति (प्रभवन्ति)। महर्द्धिकदेवापेक्षमेतत्, अन्येषु महाबलत्वादिविशेषणानां सम्यगनुपपद्य-मानत्वादिति ॥ २३० ॥ अथ संस्थानद्वारम्—

सव्वेसिं संठाणं, समचउरंसं पढममाइण्णं ।
उत्तरविउव्विय पुण, नाणाविहसंठाणं ॥ २३१ ॥

' सर्वेषां ' जघन्यमध्यमोत्कृष्टभेदभाजां भवनपत्यादिभेदभाजां वा ' संस्थानं ' शरीराकारः समाः—शरीरलक्षणानुवर्तनेनाविषमाश्चतस्रोऽस्रयः—देहपार्श्वलक्षणा यत्र तत्समचतुरस्रम्, महान् अर्घः—विशिष्टार्थसाधकत्वसंभावनालक्षणो यस्य तत्तथा तादृग्माहात्म्यं यस्य तन्महार्घमाहात्म्यम् । भवधारणीयशरीरापेक्षमेतत् । उत्तरवैक्रियं पुनः शरीरं नानाविधरूपाणि—समचतुरस्रन्यग्रोधपरिमण्डलादीनि संस्थानानि यत्र तत्, नानाविधरूपसंस्थानत्वादस्येति ॥२२१॥ संप्रति गन्धद्वारम्—

गंधेण सुरहिगंधा, सुहफासा विम्हयं जणंतहियं ।
सिंबलिरूयब्भहिया, अणोवमा अरयलंविच्छा ॥ २२२ ॥

' गन्धेन ' घ्राणेन्द्रियग्राह्यगुणलक्षणेन यदा पर्यालोच्यन्ते तदा किम् ? इत्याह—' सुरभिगन्धाः ' मृगमदकर्पूरागुरुप्रभृ[त्य]तिशायिदेहसौगन्ध्यभाजः । अथ स्पर्शद्वारम्—सुखहेतुत्वात्सुखः शुभो वा स्पर्शः शरीरप्रभवो येषां ते सुखस्पर्शाः, ' विस्मयं ' अहो ! किमेतदिति चित्तचमत्कारलक्षणं ' जनयन्ति ' वितन्वते ' अधिकं ' शेषशुभभावजनितविस्मयापेक्षातिरिक्तं दृष्टाः सन्तः, पुनः स्पर्शमेव व्यनक्ति—' शाल्मलीरूताभ्यधिकाः ' शाल्मलेर्वृक्षस्य यद् रूतं अर्कतूलादिभ्योऽपि सुकुमालप्रकृति ततोऽभ्यधिकसौकुमार्याः, ' अनुपमाः ' रूपलावण्यादिगुणविषयेणाऽप्युपमातुमशक्याः । वर्णकप्रस्तावादपरमप्याह—' अरयलंविच्छ ' त्ति अरजसः—शरीरवस्त्रादिषु मललक्षणरजोरहिताः, अलम्बेच्छाः—संपन्नसर्वेन्द्रियार्थतया प्रकृतिपुरुषतया चाविद्यमानतथाविधाकाङ्क्षाः । एतदपि महर्द्धिकदेवापेक्षं प्रायेणेति ॥ २२२ ॥ इदानीमुच्छ्वासमाहारद्वारे युगपदेवाह—

जइ जस्स पराइं ठिई, तइ मासद्धेहिं तस्स उस्सासो।
तइ वाससहस्सेहिं य, आहारो उवरिमसुराणं ॥ २२३ ॥

'जइ' त्ति यावन्ति यस्य 'अयराणि' सागरोपमा[णि] स्थिति' 'तइ' त्ति तावद्भिः 'मासार्द्धैः' पक्षदशदिनरूपैः 'तस्य' देवस्य 'उच्छ्वास' इति उच्छ्वासनिःश्वासौ प्रवर्त्तेते। तथा 'तइ' त्ति तावद्भिः स्वस्थितिसागरोपमप्रमाणैर्वर्षसहस्रैः 'च' पुनरर्थे 'आहार' मानसाभ्यवहारलक्षणः सम्पद्यते। केषाम्? इत्याह—'उवरिमसुराण' त्ति उपरितनसुराणां सौधर्मादिवास्तव्यदेवानाम्। प्रायःपक्षापेक्षमेतत्, अन्यथा चमरबल्योरप्येकसागरोपमाधिकसागरोपमस्थितितया पक्षेणोच्छ्वासो वर्षसहस्रेण चाहार प्रवर्त्तते। सागरोपमाव'स्थितीनां तु देवानामाभ्यां गाथाभ्यामाहारोच्छ्वासविधिर्विज्ञेयः—"दसवाससहस्साइं, जहण्णमाउं धरन्ति जे देवा। तेसिं चउत्थाहारो, सत्तहिं थोवेहिं उस्सासो ॥ १ ॥ दसवाससहस्साइं, समयाइं जाव सागरं ऊणं। दिवसमुहुत्तपुहुत्ता, आहारूसास सेसाणं ॥ २ ॥" इति ॥ २२३ ॥

अथ वक्तव्यान्तरविवक्षया द्वारगाथामाह—

लेस्सा दिट्ठी नाणे, उवओगे चेव होइ जोगे य।
तत्तो य समुग्घाओ, विउव्वणा साय रिद्धी य ॥ २२४ ॥

'लेश्या' तेजोलेश्यादिका 'दृष्टि' मिथ्यादृष्ट्यादिका 'ज्ञान' मत्यादिकं 'उपयोगश्चैव' साकारानाकारभेदो भवति वक्तव्य। 'योगश्च' मनोवाक्काययोगादि 'ततश्च' तदनन्तरं 'समुद्घात' वैक्रियसमुद्घात 'विकुर्वणा' वैक्रियकरणशक्तिप्रमाण 'सात' सुखं 'ऋद्धिश्च' परिवारादिकेति ॥२२४॥ अथैनामेव द्वारगाथां गाथादशकेन व्याचष्टे—

दोसुं तु तेउलेसा, तीसु य कप्पेसु पम्हलेसागा ।
तेण परं सुक्कलेसा, देवा सव्वे वि विन्नेया ॥ ३३५ ॥

' द्वयोः ' कल्पयोः सौधर्मेशानयोः ' तुः ' पूर्ववत् तेजोलेश्या देवानाम् । ' त्रिषु च कल्पेषु ' सनत्कुमारमाहेन्द्रब्रह्मलोकलक्षणेषु ' पद्मलेश्याकाः ' पद्मकेसरवल्लेश्या येषां ते तथा । ' तेण परं ' ति ततः परं शुक्ललेश्या देवाः ' सर्वेऽपि ' इन्द्रसामानिकत्रायस्त्रिंशलोकपालादयो विज्ञेया इति । लेश्या नाम लिश्यते—श्लिष्यते आभिर्जीवः कर्मणेति लेश्याः, ताश्च द्रव्यभावभेदाद्द्विभेदाः । तत्र द्रव्यलेश्या—यानि किल द्रव्याण्याश्रित्य जीवस्य स्फटिकमणेरिव कृष्णादिभावलेश्यापरिणामः प्रवर्त्तते तानि द्रव्यतो भिद्यमानानि द्रव्यलेश्या इति । तत्र भ्रमराङ्गारकाककोकिलादिसमानवर्णा कृष्णलेश्या । शेषास्तु नील—कपोती—तैजसी—पद्मा—शुक्लाभिधाना लेश्या यथाक्रमं कदलीदल—कपोतच्छद—जपाकुसुम—कमलकेशर—हंससदृशप्रकाशा विज्ञेया इति । यथोक्तम्—" किण्हा भमरसवण्णा, नीला पुण गवलगुलियसंकासा । काऊ कवोयवण्णा, तेऊ तवणिज्जवण्णाभा ॥ १ ॥ पम्हा पउमसवण्णा, सुक्का पुण कुन्दुमकाससंकासा । " इति । भावलेश्या पुनर्मिथ्यात्वासंयमकषायानुरक्तयोगः प्रवृत्तिरूपः कर्मपुद्गलादानहेतुर्द्रव्यलेश्याजनितो जीवपरिणामः । एताश्च द्रव्यलेश्या इहाधिक्रियन्ते न पुनर्भावलेश्याः । यथोक्तम्—" देवाण नारयाण य, दव्वलेसा हवंति एयाओ । भावपरावत्तीए, सुरनेरइया उ छल्लेसा ॥ १ ॥ " इति ॥ ३३५ ॥ अथ दृष्टिद्वारम्—

मिच्छा सम्मामिच्छा, सम्मद्दिट्ठी य तिन्नि दिट्ठीओ ।
देवेसु मुणेयव्वा, नाणं तु अओ परं वोच्छं ॥ ३३६ ॥

'मिथ्या' मिथ्यात्वलक्षणा 'सम्यग्मिथ्या' मिश्ररूपा 'सम्यग्दृष्टिश्च' सम्यल(क्त्वल)क्षणा इत्येतास्तिस्रो दृष्टय 'देवेषु' सौधर्मादिदेवलोकगतेषु मुणितव्या । ज्ञानद्वारमुपक्षेप्तुमाह—ज्ञान 'तु' विशेषणार्थं अत पर वक्ष्य इति ॥ २२६ ॥

नाणी अन्नाणी वि य, सव्वे वि सुरा उ जाव गेवेज्जा ।
उवओगो पुण दुविहो, सागारो चेवऽणागारो ॥ २२७ ॥

'ज्ञानिन' मतिश्रुतावधिरूपज्ञानत्रयभाज 'अज्ञानिनोऽपि च' मत्यज्ञानश्रुताज्ञानविभङ्गरूपाज्ञानत्रयभाज सर्वेऽपि सुरा 'तु' पुनर्यावद् ग्रैवेयकाणि । उपयोग पुनर्द्विविध सर्वदेवेषु 'साकार' [सामान्यविशेषात्मके वस्तुनि] विशेषग्रहणरूप, 'चैव' इति भिन्नक्रमे, तत 'अनाकारश्चैव' सामान्यविशेषात्मके वस्तुनि सामान्यग्रहणरूप इति ॥ २२७ ॥ इदानीं योगद्वारम्—

तिविहो य होइ जोगो, मणवइकाएण जो (सो) मुणेयव्वो ।
तियजोग य नायाइं, अणुत्तरविमाणवासीणं ॥ २२८ ॥

त्रिविधश्च भवति, क ? इत्याह—'योग' जीवपरिस्पन्दात्मको व्यापार । त्रैविध्यमेव भावयति—'मनोवाक्कायेन' इति मनसा वैक्रियशरीरप्रयत्नाहृतमनोवर्गणान्तर्गतमनोद्रव्यसमूहलक्षणेन, एव वचसा, नवरं भाषावर्गणान्तर्गतवाग्द्रव्यसमूहमयेन, कायेन वैक्रियवर्गणारब्धदेहलक्षणेन । एष योगो यथाक्रम चिन्ताभाषागमनागमनादिक्रियाफलो देवान् (देवानाम्) [मुणितव्य] । उक्त च—'मणसा वयसा काएण वा वि जुत्तस्स विरियपरिणामो । जीवस्स अप्पणिज्जो, स जोगसन्नो जिणक्खाओ ॥ १ ॥" अथ प्रागुक्तज्ञानद्वारमेवाधिकृत्य किञ्चिदाह—

त्रीण्येव च ज्ञानानि न पुनरज्ञानान्यपि अनुत्तरविमानवासिनाम्, पवित्रसम्यग्दर्शनज्ञानचारित्रपात्राणामेव जन्तूनां तत्रोत्पादादिति ॥ ३३८ ॥

अथात्रैव जघन्यमुत्कृष्टं चावधिं देवेषु प्रतिपादयन् गाथाचतुष्टयमाह—

सव्वेसु जहन्नोही, अंगुलभागो भवे असंखेज्जो ।
उड्ढं सगा विमाणा, तिरियं दीवोदधिमसंखा ॥ ३३९ ॥

'सर्वेषु' सौधर्मादिषु देवस्थानेषु जघन्योऽवधिः, कियान्? इत्याह—अङ्गुलभागो भवेदसंख्येयः, विषय[विषयि]णोरभेदोपचारादेतदुक्तम्, अन्यथाऽङ्गुलाऽसंख्येयभागमात्रक्षेत्रव्यवस्थितमूर्त्तद्रव्यराशिस्तस्य विषयो वर्तत इति वक्तुमुचितम्। क्षेत्रप्रस्तावात्प्रमाणाङ्गुलमेतदित्येके व्याचक्षते। अन्ये त्ववधेः शरीरावस्थितत्वात् शरीरस्य चोत्सेधाङ्गुलेनैव प्रतीयमानत्वात् तदपेक्षयैवावधिविषयक्षेत्रप्रमाणमद इति ब्रुवते। एतच्चोत्पत्तिकाल एवापर्याप्तावस्थायां मन्तव्यम्। उत्कृष्टतस्तूर्ध्वं 'स्वकाद्विमानात्' स्वकविमानाग्रभागं यावदित्यर्थः। 'तिर्यग्' इति तिर्यक्क्षेत्रं द्वीपोदधयोऽसंख्येयाः अवधेर्विषयः, परमुपर्युपरिवर्त्तिनो देवास्तानेव बहुबहुतरान पश्यन्तीति ॥ ३३९ ॥ अपश्च—

सक्कीसाणा पढमं, दोच्चं च सणंकुमारमाहिंदा ।
तच्चं च बंभलंतग, सुक्कसहस्सारग चउत्थीं ॥ ३४० ॥

'शक्रेशानौ' इन्द्रौ उपलक्षणत्वादिन्द्रसामानिका अपि 'प्रथमां' रत्नप्रभां यावत्पश्यन्तीत्युत्तरेण योगः। 'द्वितीयां च' शर्कराप्रभां पुनर्यावत्सनत्कुमारमाहेन्द्राविन्द्रौ। तृतीयां च [पृथ्वीं] ब्रह्मलान्तकौ। शुक्रसहस्रारौ चतुर्थीं पृथ्वीं यावदिति ॥ ३४० ॥

आणयपाणयकप्पे, देवा पासंति पंचमिं पुढविं ।
तं चेव आरणच्चुय, ओहीनाणेण पासंति ॥ ३४१ ॥

आनतप्राणतकल्पयो' वचनव्यत्ययश्च प्राकृतत्वात् ये 'देवा' इन्द्रतत्सामानिकरूपास्ते पश्यन्ति पञ्चमीं पृथ्वीम्। 'तां चेव' पञ्चमी मारणाच्युतयोर्देवा अवधिज्ञानेन पश्यन्ति परं विशुद्धतरामिति॥१४१॥

छट्ठिं हेट्ठिममज्झिमगेवेज्जा सत्तमिं च उवरिल्ला।
संभिन्नलोगनालिं, पासंति अणुत्तरा देवा॥ १४२॥

षष्ठीं पृथ्वीं यावदधस्तनमध्यमग्रैवेयका, 'हस्वा( तास्व्या )स-द्रूपवेद्य' इतिन्यायात् बहुता देवा। सप्तमीं च पृथ्वीं 'उपरि-तना' उपरितनग्रैवेयकत्रयगता। संभिन्ना—किञ्चिदूनां लोकनाली—त्रस-नाडीकन्यापृथ्वीमपश्चिमं च पश्यन्त्यनुत्तरा देवा इति॥१४२॥ अथ समुद्घातवैक्रियद्वारे समर्मेवाह—

वेउव्विसमुग्घाओ, जाव उ कप्पोवगा भवे देवा।
एक्को य असंखे, विउव्वए पुरिसथीरूवे॥ १४३॥

वैक्रियशरीरस्य सम्—एकीभावेन उत्—प्राबल्येन घात —जीवप्रदे-शानां बहि क्षेपो वैक्रियसमुद्घात, कियद्दूरम्? इत्याह—यावत्तु 'कल्पोपगा' भवनपत्यादयोऽच्युतावसाना भवेयुर्देवास्तावदेव। 'एक-कश्च' इन्द्रतत्सामानिकादिर्देवोऽसंख्येयानि विकुरुते स्त्रीपुरुषरूपाणि यौगपद्येनेव, शक्तिरेवेषा एतेषा न पुन क्रियापि। यथोक्तं भगवत्या ( शतक३ उदे० १ ) एवमर्थ —"चमरो भदन्त! देवेन्द्रो देवराज कियन्ति रूपाणि प्रभुर्विकर्तुम्" इति गौतमेन पृष्टे भगवानुवाच—"यथा कश्चिद्युवा युवति ( तिं ) निविडकरशाखाग्रहणवता हस्तेन हस्ते गृहीयात्, चक्रस्य वा नाभिरायोजितारकमत्त्या सती निविड रूप-माविर्भवति यथा, एवमेव भवमप्रभृतावपि जम्बूद्वीपद्वयप्रमाण क्षेत्र बहु-

भिर्देवरूपैर्देवीरूपैश्चात्यन्तं पूरितं कर्तुं समर्थः। अथोत्तरं च गौतम ! असंख्येयानपि द्वीपसमुद्रांस्तैरेवाकीर्णान् कर्तुं समर्थः। एवं तत्सामानिका अपि प्रागभिहितशक्तियुक्ताः। यथा सौधर्मे तथा शेषेष्वपि यावदच्युतकल्पस्तावद्वैक्रियशक्तिव्यापारमुपर्युपर्यधिकाधिकतराधिकतमा वेति। एतच्च गौतम ! शक्तिविषयमात्रमुक्तम्, न पुनः कश्चिद्देवो देवी वा विकृतवान् विकुरुते विकरिष्यते च" इति। ये च ग्रैवेयकपञ्चानुत्तरदेवा न ते वैक्रियसमुद्घातमारभन्ते, तेषां स्वस्थप्रकृतितया वैक्रियशरीरसाध्यप्रयोजनाभावादिति ॥ ३४३ ॥ अथ सातद्वारमाह—

सायं सुहं महंतं, इड्ढीए महिड्ढिया भवे तिविहा।
थोवा मज्झुक्कोसा, कप्पाईया य (उ) अहमिंदा ॥ ३४४ ॥

सत्–सुन्दरं तदेव स्वार्थिकाणप्रत्ययोपादानात्सातम्, किम् ? इत्याह–'सुखं' शर्म 'महत्' मनुष्यसुखापेक्षयाऽतीवप्रकर्षवत्, जरारोगशीतवाताद्युपद्रवव्रातविकलत्वात्तेषाम्। इदानीं ऋद्धिद्वारम्–ऋद्ध्या महर्द्धिका देवा भवेयुस्त्रिविधाः। त्रैविध्यमेव दर्शयति–'स्तोकाः' जघन्यर्द्धयः केचित्किल्विषादयः, 'मध्यमाः' मध्यमर्द्धयः प्रकीर्णकानीकाधिपत्यादयः। 'उत्कृष्टाः' इन्द्रतत्सामानिकादयः, एवं तावत्कल्पेषु ऋद्धित्रैविध्यमुक्तम्। तदुपरि का वार्ता ? इत्याह–'कल्पातीतास्तु' ग्रैवेयकाऽनुत्तरवासिनः पुनर्देवाः 'अहमिन्द्राः' अहमिन्द्र इत्यभिधानं येषां तेऽहमिन्द्राः, आत्माधिकस्य कस्यचित्तैरदर्शनादिति ॥ ३४४ ॥ अथ द्वारगाथान्तरमाह—

देवाणं देवीणं, च विभूसा कामभोगमाउं च।
चयणं च सव्वजीवा, कप्पे कप्पे य उववाओ ॥ ३४५ ॥

देवानां देवीनां च विभूषा वक्तव्या । तेषामेव ' कामभोग ' त्ति कामभोगाः, आयुःक्षयेन च, 'सव्वजीव' त्ति सर्वजीवानां कल्पे कल्पे चोपपातो वाच्य इति ॥ २४५ ॥ अर्थेनामेव गाथाषट्केन व्याचष्टे—

सोहम्मे ईसाणे, नियमा देवाण अच्छराण च ।
होइ विभूसा तणुई, सेसेसुवरिं परायत्ता ॥ २४६ ॥

सौधर्मे ईशाने ' नियमात् ' निश्चयेन देवानामप्सरसां च भवति, कासौ ? इत्याह—' विभूषा ' अत्यन्तसुन्दरवस्त्रविलेपनपुष्पादीनां शृङ्गाराङ्गानामुपादानेन भोगरागितया देहशयनासनयानविमानादिमण्डनरूपा । ' तन्वी ' तुच्छरूपा ' शेषेषु ' सनत्कुमारादिषु देवलोकेषु, कुत ? इत्याह—' उपरि ' सौधर्मादिकल्पापेक्षयोपरिवर्तिनां देवानां ' अल्परागत्वात् ' मनाग्देहशयनासनविमानादिषु मन्दस्यैव मन्दाभिष्वङ्गभावात्, विभूषायाश्च शृङ्गारगमनप्रभृतिप्रभवत्वादिति ॥ २४६ ॥ उक्तं विभूषाद्वारम् । प्रवीचारद्वारमाह—

दो कायप्पवियारा, कप्पा फरिसेण दोन्नि दो रूवे ।
सद्दे दो चउर मणे, उवरिं पवियारणा नत्थि ॥ २४७ ॥

' द्वौ ' द्विसङ्ख्यौ कायेन—शरीरेणात्रत्यस्त्रीपुरुषाणामिव प्रवीचारः—कामक्रीडा ययोस्तौ कायप्रवीचारौ ' कल्पौ ' सौधर्मेशानलक्षणौ, "तात्स्थ्यात्तद्व्यपदेशः" इति सौधर्मेशानकल्पस्था देवाः कायप्रवीचाराः । ' स्पर्शेन ' स्तनजघनादिशरीरावयवस्पर्शेन ' द्वौ ' सनत्कुमारमाहेन्द्रकल्पौ प्रवीचारवन्तौ भवत इति सर्वत्र सम्बध्यते । ' द्वौ ' ब्रह्मलोकलान्तककल्पौ ' रूपे ' तथाविधकामुकजनयोग्यावस्थामानि सुस्तनमनोहरादिगते परस्पर दर्शनविषयभावापन्ने सति । ' शब्दे ' गीतभणित-

मन्मनभाषिताभरणादिसंबन्धिनि ध्वनौ मदनमुर्मुरोद्दीपनमन्दपवनसमाने श्रवणविवरसंचारिणि सति ' द्वौ ' शुक्रसहस्रारौ । ' चत्वारः ' आनतप्राणतारणाच्युतकल्पाः ' मनसि ' प्रदीपितपरस्परानुरागगर्भमदनवह्नौ चित्ते प्रवृत्ते सति । इदमुक्तं भवति—यथा कयोश्चिद्दम्पत्योः स्वभावत एव परस्परारूढदृढानुरागयोर्यौवनारम्भसमय एव प्राप्तपरिणयनव्यवहारयोरप्राप्तसंभोगसुखयोरेव तत्तत्प्रयोजनवशेन प्राप्तषोडशवर्षप्रमाणविप्रयोगयोस्तदन्ते संपन्नसकलाकाङ्क्षाविषयशेषेन्द्रियार्थयोरपाररागजलधिमध्यसर्वाङ्गनिमग्नयोर्निर्दयरतसंमर्दावसाने यादृक्संवेदोदयोपशमजं सर्वाङ्गस्वास्थ्यमुत्पद्यते ततोऽनन्तगुणमेव सौधर्मेशानादिदेवानां कायादिप्रवीचारानुसारेणोक्तरूपेण संभोगसुखं जायत इति । इत्थं कल्पवक्तव्यतामभिधाय कल्पातीतदेवलोकवक्तव्यतामाह—' उपरि ' ग्रैवेयकानुत्तरेषु विमानेषु देवानां ' प्रवीचारणा ' वेदोदयोपशमार्थव्यापाररूपा 'नास्ति' न विद्यते, अत्यन्तमन्दपुरुषवेदोदयत्वे तत्कृतोपतापाभावात् ॥ २४७ ॥

अथायुर्द्वारम्—

दो साहि सत्त साही, दस चोद्दस सत्तरेव अयराइं ।
सोहम्मा जा सुक्को, तदुवरि एक्केक्कमारोवे ॥ २४८ ॥

द्वे तथा द्वे साधिके एव तथा सप्त ' साहि ' त्ति साधिकानि सप्तैव दश चतुर्दश सप्तदशैव ' अतराणि ' सागरोपमाणि देवानामुपरि स्थितिः । किमादिः ? किंपर्यवसानश्चायं व्यवहारः ? इत्याह—सौधर्माद्यावच्छुक्रस्तावत् क्रमेणेति । तदूर्ध्वं का गतिः ? इत्याह—' तदुपरि ' सहस्रारानतप्राणतारणाच्युतेषु नवसु ग्रैवेयकेषु क्रमेण ' एकैकं ' सागरोपमं पूर्वपूर्वस्थितेरुपरि समारोपय यावन्नवमग्रैवेयके एकत्रिंशत्सागरो-

पमाणि । विजयादिषु चतुर्षु पुनर्जघन्येनैव क्रमेण द्वात्रिंशदेव सागरोपमाण्युत्कृष्टा स्थितिः प्राप्नोति तथापि तत्र त्रयस्त्रिंशदेव, जघन्येन त्वेकत्रिंशत् । " तेतीस सागराइ, उक्कोसेण ठिई भवे चउसु । विजयाइसु विन्नेया, जहण्णेण एगतीसं तु ॥ १ ॥ " इति ॥ १४८ ॥

अथ जघन्यामाह—

पलियं अहियं दो सार साहिया सत्त दस य चोद्दस य ।
सत्तरस सहस्सारे, तदुवरि एक्केक्कमारोवे ॥ १४९ ॥

' पलियं ' ति पल्योपमं सौधर्मे । ' अधिक ' साधिकं पल्योपमं ईशाने । 'दो सार' त्ति द्वे सागरोपमे सनत्कुमारे । साधिके द्वे सागरोपमे माहेन्द्रे । सप्त ब्रह्मलोके । दश लान्तके । [ चतुर्दश शुक्रे ] सागरोपमानि । सप्तदश सहस्रारे कल्पे । 'तदुपरि' आनतादिषु (आनतादिषु ) देवस्थानेष्वेकैकमारोपयेत्तावद्यावद्विजयादिष्वेकत्रिंशदिति ॥ १४९ ॥ सांप्रतं च्यवनद्वारम्—

एक्को व दो व तिण्णि व, संखमसंखा व एगसमएण ।
देवा चयंति नियमा, उववाओ अस्रो पर वोच्छं ॥ १५० ॥

एको वा द्वौ वा त्रयो वा ' संखमसंखा व ' त्ति संख्याता असंख्याता वा ' एगसमएण ' ति एकसमयेनेत्यर्थः ' देवा ' सामान्यतो भवनपत्यादयः भ्रष्टमलुगताः सौधर्मादिदेवलोकवासिनो वा ' च्यवन्ते ' ध्रमन्ति ' नियमात् ' अवश्यन्तयेति । ' उपपात ' उत्पादः जीवा अत्रोत्पद्यन्त इत्येवंरूपमतः परं वक्ष्य इति ॥ १५० ॥

मिच्छा सासणदिट्ठी, सम्मद्दिट्ठी य तिविह जीवा तु ।
अज्झवसायविसेसा, सयणविसेसओ य गई ॥ १५१ ॥

मिथ्यादृष्टयः सासादनदृष्टयः सम्यग्दृष्टयश्चेति त्रिविधा जीवाः संसारिणः पञ्चेन्द्रियतिर्यञ्चो मनुष्याश्च ये वर्तन्ते, 'तुः' पूरणे, तेषां किम्? इत्याह—'अध्यवसायविशेषात्' मिथ्यात्वादिलक्षणपरिणामहेतुत्वात् 'संहननविशेषतश्च' वज्रर्षभनाराचादिसंहननविशेषात् 'च' समुच्चये 'गतिः' सौधर्मादिदेवलोकोत्पत्तिलक्षणा वाच्या। तत्र मिथ्यादृष्टयः सौधर्मादारभ्य नवमग्रैवेयकाणि यावत्सामग्रीवशादुत्पद्यन्ते। सासादनदृष्टीनां तु विशेषः सूत्रादवमेयः। सम्यग्दृष्टयस्तु सौधर्मादारभ्य यावदनुत्तरविमानानि तावत्सर्वत्र तथाविधाध्यवसायवशेनोत्पत्तिभाजो भवन्तीति। संस्थान(संहनन)विशेषात्पुनरित्थं गतिरवसेया। यथा—"छेवट्ठेण उ गम्मइ, चत्तारि उ जाव आइमा कप्पा। वड्ढेज्ज कप्पजुयलं, संघयणे कीलियाईए ॥ १ ॥" ॥ ३९१ ॥

अथोर्ध्वगतिप्रस्तावादेव रत्नप्रभादीनां पृथ्वीनां लोकान्तं यावत्क्रमेण तुल्योच्छ्रितानां कस्याः पृथिव्याः कस्मिन्नन्तरे पातलक्षणा गतिर्भवतीति निरूपयन् गाथाचतुष्टयमाह—

सत्त वि सट्टाणेहिं, पुढवीओ ऊसिया कहिं पडंति।
हेट्ठा दोण्हं दोण्हं, कप्पाणं पंच पुढवीओ ॥ ३५२ ॥

सप्तापि न केवलमेकैकेत्यपिशब्दार्थः, 'स्वस्थानेभ्यः' स्वकीयेभ्योऽवकाशेभ्यः 'पृथिव्यः' रत्नप्रभाद्याः 'उच्छ्रिताः' उत्पादिताः सत्यः कस्मिन्नन्तरे 'पतन्ति' अवकाशं लभन्ते? इति शिष्येण पृष्टे सूरिराह—'अधस्तात्' तलभागे [द्वयोः] द्वयोः कल्पयोः [पञ्च] पृथिव्यः पतन्तीति। अत्र च वक्ष्यमाणान्तरान्यथानुपपत्तिवशेन क्वचित्साक्षादेव कल्पः क्वचित्कल्पावयवः कल्पशब्देनाभिधीयत इति ॥ ३९२ ॥

हेट्ठा गेविज्जाणं, पुढवी खलु सक्करप्पभा होइ ।
हेट्ठा अणुत्तराणं, पुढवी रयणप्पभा होइ ॥ २५३ ॥

अधस्तात् 'ग्रैवेयकाणां' आद्यानां ग्रैवेयकप्रस्तटानां पृथ्वी खलु शर्कराप्रभा भवति । तथा अधस्ताद् 'अनुत्तराणां' पञ्चानां विमानानां पृथ्वी रत्नप्रभा भवति ॥२५३॥ एवं च सति किं सिद्धम् ? इत्याह—

उवरिं लोगंताओ, सत्त वि खलु लंबियाओ पुढवीओ ।
उडुचंदविमाणाओ, एयम्मि उ अंतरे खुड्डे ॥ २५४ ॥

'उपरि' ऊर्ध्वलोके 'लोकान्तात्' सिद्धिक्षेत्रपर्यन्तभागलक्षणात् सप्तापि 'खलु' वाक्यालङ्कारे 'लम्बिता' मुक्ता 'पृथिव्यः' रत्नप्रभादिका पृथ्वीपिण्डमपेक्ष्य, क्व ? इत्याह—'उडुचन्द्रविमानानां' काञ्चनरुचिरापरनामप्रथमप्रस्तटगतविमानानां सन्निधान्येतस्मिन्नन्तरे 'खुड्ड' त्ति निष्ठा भाषा पिण्डपातमपेक्ष्य । इह च प्रस्तुतयोरेवोडुचन्द्रनाम्नोः प्रथमद्वितीयप्रस्तटयोरन्तरेऽभ्युपगम्यमाने वक्ष्यमाणस्य नवमप्रस्तटान्तरे सप्तमपृथ्वीपिण्डस्य पातानुपपत्तेः ॥ २५४ ॥ इत्यमेताः पृथिव्यो लम्बिता कल्पानामधोभागे पतन्ति । अथ केषु नाम प्रस्तटान्तरेषु पतन्ति ? इत्याह—

एएहिं अंतरेहिं, इमेहिं भागेहिं सत्तगच्छेओ ।
सट्ठाणमूसियाओ, सव्वत्थ पडंति पुढवीओ ॥ २५५ ॥

'एतेषु' वक्ष्यमाणे ( येषु ) नवाष्टादशादिषु 'अन्तरेषु' प्रस्तटविवरलक्षणेषु, तत्रापि 'एतेषु' वक्ष्यमाणेष्वेव 'भागेषु' पञ्चकादिषु पर तेषां भागानां सप्तकच्छेदः कार्यः, नवमाद्यन्तरस्य सप्तभागीकृतस्य

पञ्चमादिभागेष्वित्यर्थः, किम्? इत्याह—स्वस्थानादुच्छ्रिताः सन्यः 'सर्वत्र' सर्वेषु वक्ष्यमाणेषु भागेषु क्रमेण पतन्ति पृथिव्य इति ॥ ३५५ ॥ नवादिभागानेवाह—

नव अट्ठारस एगूणतीस पणतीस तह य चोयाला ।
तेवण्णे एगट्ठी, य अंतरा होंति पुढवीओ ॥ ३५६ ॥

'नव' त्ति प्राकृतत्वात् नवमं अष्टादशं एकोनत्रिंशं पञ्चत्रिंशं तथा च 'चोयाल' त्ति चतुश्चत्वारिंशं 'तेवण्णे' त्ति त्रिपञ्चाशं 'एगट्ठी य' त्ति एकषष्टं च, एतान्यन्तराणि प्रतीत्य विभक्तिलोपश्च सर्वत्र प्राकृतत्वाद्, भवन्ति पृथिव्य इति ॥ ३५६ ॥ एतेष्वेवान्तरेषु भागान्निर्दिदिक्षुराह—

पंच तिग एग छक्कग, चउक्क तिग सत्तमेसु भागेसु ।
सट्टाणमूसियाओ, सव्वत्थ पडंति पुढवीओ ॥ ३५७ ॥

आर्षत्वात् पञ्चमतृतीयएक (प्रथम) षष्ठचतुर्थतृतीयसप्तमेषु भागेषु यथाक्रमं शेषं प्राग्वत्। अयमत्र भावः—इह किल द्वाषष्टिरूर्ध्वलोकप्रस्तटाः, एकषष्टिश्च तदन्तराणि। तत्र सौधर्मेशानसंबन्धिनोर्नवमदशमयोः प्रस्तटान्तरे तस्यापि पञ्चमे सप्तभागे महातमःप्रभापृथ्वीपिण्डो निष्ठां याति। सनत्कुमारमाहेन्द्रसंबन्धिपञ्चमषष्ठप्रस्तटान्तरेषु बहुप्रस्तटान्तरापेक्षयाऽष्टादशे तस्यापि तृतीयसप्तांशे तमःप्रभायाः। ब्रह्मलोकचतुर्थपञ्चमप्रस्तटान्तरे मूलमपेक्ष्यैकोनत्रिंशे तस्यापि प्रथमे सप्तांशे धूमप्रभायाः। लान्तकचतुर्थपञ्चमप्रस्तटान्तरे सर्वान्तरापेक्षया पञ्चत्रिंशत्तमे तस्यापि षष्ठे सप्तांशे पङ्कप्रभायाः। सहस्रारस्यानतप्राणतयोश्च कल्पयोरन्तरे मूलान्तरापेक्षया चतुश्चत्वारिंशे तस्यापि चतुर्थे सप्तांशे वालुकाप्रभायाः।

अथषष्ठद्वितीयग्रैवेयकयोरन्तरे मूलान्तरापेक्षया त्रिपञ्चाशत्तमे तस्यापि तृतीये सप्तभागे शर्कराप्रभाया । नवमग्रैवेयकसर्वार्थसिद्धमध्यान्तरे सर्वापेक्षयैकषष्टितमे तस्यापि सप्तमे सप्तांशे रत्नप्रभाया पिण्डो निष्ठां याति । अत्र च नवमादीनां मध्यान्तराणां ये षष्ठमादयो भागास्ते षष्ठभागादूर्ध्वं ज्ञातव्या इति ॥ १९७ ॥ अथात्रैव प्रसङ्ग विशेषं वक्तुकाम आह—

रयणप्पहाए उवरिं, सत्त वि खलु कप्पियाओ पुढवीओ ।
हेट्ठा अणुत्तराणं, सोवाणगई व बोधव्या ॥ १९८ ॥

'रत्नप्रभाया' प्रथमपृथिव्या 'स्थाने' इति विभक्तिव्यत्ययात् 'स्थानात्' आरभ्यादात्, किं च रत्नप्रभायाः स्थानम्? इति चेदुच्यते—समभूमितलादधोभाग इति, तत सकाशात्सप्तापि किं पुनरेकैकेत्यपिशब्दार्थः 'खलु' वाक्यालङ्कारे 'उप्पिलूया' ऊर्ध्वमुत्पाटिता पृथिव्यो रत्नप्रभाद्याः, तत किम्? इत्याह—अधस्तात् 'अणुत्तराण' ति अनुत्तरेभ्यः सोपानगत्या बोद्धव्याः, यथा हि सोपानान्यधोऽधो विस्तृतानि भवन्ति, एवमेता अपि रत्नप्रभाद्याः स्वस्थानोत्पाटिता क्रमेणैव बुद्ध्या लोकान्तमारोपिता इति ॥ १९८ ॥ सम्प्रति यदैता एव महातमःप्रभाप्रभृतीरादौ कृत्वा उपरि पिण्डोऽस्त्राव बद्धचकासेधमित्यनेन क्रमेण लोकान्तादवलम्ब्यन्ते तदा कस्याः पृथिव्याः कस्मिन् स्थाने पिण्डः पततीति मनसि समाधाय गाथाद्वयमाह—

रयणाईणा हेट्ठा, बितिया बहुया उ बंभलोगम्मि ।
पंका लंतयउवरिं, धूमा सहसार उवरिं तु ॥ १९९ ॥

'रत्नाद्याः' रत्नप्रभाप्रभृतिका पश्चानुपूर्व्या 'अधस्तात्' अधो-

मुखं लोकान्तादवतारिताः सत्य एतेषु स्थानेषु पतन्ति । तद्यथा— सौधर्मेशाननवमप्रस्तटान्तरे रत्नप्रभा । ( ग्रंथाग्रं २५०० ) 'बीय' त्ति 'द्वितीया' शर्कराप्रभा सनत्कुमारमाहेन्द्रपञ्चमपटप्रस्तटान्तरे । 'तृतीया तु' वालि(लु)काप्रभा ब्रह्मलोके चतुर्थपञ्चमप्रस्तटान्तरे । 'पङ्का' चतुर्थपृथ्वी लान्तकस्थाने तच्चतुर्थपञ्चमप्रस्तटान्तरे । 'धूमा' पञ्चमी पृथ्वी सहस्रारोपरि । 'तुः' विशेषण इति ॥ ३५९ ॥

गेवेज्जाणं हेट्ठा, छट्ठी अहऽणुत्तराण सत्तमिया ।
सट्ठाणमूसियाओ, सव्वत्थ पडंति पुढवीओ ॥ ३६० ॥

'ग्रैवेयकाणां' अष्टानामधस्तात् 'षष्ठी' तमःप्रभा । 'अथ' अनन्तरं 'अनुत्तराणां' पञ्चानां सर्वार्थसिद्धादीनां 'सप्तमिका' महातमःप्रभा । एवं 'स्वस्थानोच्छ्रिताः' विपरीतगत्योत्पाटिताः सत्यः 'सर्वत्र' सर्वेषु प्राग्निरूपितेषु पञ्चमादिषु समांशेषु 'पतन्ति' अवतरन्ति पृथिव्य इति । अत्र च गाथाष्टकेऽन्यदपि क्वचित्किञ्चित्पाठान्तर- मुपलभ्यते तच्च न सम्यगवबुध्यते इति ॥ ३६० ॥ अथ सौधर्मादिषु प्रतिप्रस्तटमुत्कृष्टां जघन्यां च स्थितिं प्रतिपादयितुमिच्छुः सामान्यतस्ता- वत्तामेव गाथाद्वयेनाह—

दो सत्त दस य चोदस, सत्तरसट्ठार जाव इगतीसा ।
सक्कादीणुक्कोसा, ठिती उ जा उवरि गेवेज्जा ॥ ३६१ ॥

द्वे सप्त दश चतुर्दश च सप्तदशाष्टादश तत्प्रभृति यावदेकत्रिंशत्सा- गरोपमाणि 'शक्रादीनां' सौधर्मेशानादिदेवलोकगतेन्द्राणां [ उत्कृष्टा ] स्थितिः प्रतिनियतायुर्लक्षणा ज्ञातव्या । एवं सागरोपमद्वयाति ( दि )- क्रमेण यावदुपरितनग्रैवेयकाणीति ॥ ३६१ ॥

पलिओवम च एग, सागर दो सत्त दस य चोद्दस य ।
सत्तरस जाव बीसा, एएसि जहण्णया उ ठिई ॥ २६२ ॥

' पल्योपम 'प्रतीतस्वरूपमेव ' च ' पूरणे एक सौधर्मेशानयो । ' सागर ' त्ति सागरोपमे [ द्वे ] सनत्कुमारमाहेन्द्रयो , सप्त ब्रह्मलोके, दश च लान्तके, चतुर्दश शुक्रे, [ सप्तदश सहस्रारे ], इत्त प्रभृत्येकैकसागरोपमवृद्ध्या तावन्नेय यावद् [ नवम ] ग्रैवेयके त्रिंशत्सागरोपमाणि, किम् ? इत्याह—' एतेषा ' शक्रादीना जघन्या तु स्थिति । पर विजयादिषु चतुर्षु एकत्रिंशत् स्थितिरायुष्काल इति ॥ २६२ ॥ एतामेव प्रतिप्रस्तरमाह—

पलिओवम जहण्णा, दो तेरसभाग उदधिनामस्स ।
उक्कोस ठिती भणिया, सोहम्मे पत्थडे पढमे ॥ २६३ ॥

पल्योपम जघन्या, द्वौ च त्रयोदशभागौ ' उदधिनाम्न 'सागरोपमस्येत्यर्थ उत्कृष्टा स्थितिर्भणिता, क ? इत्याह—सौधर्मे प्रस्तटे प्रथमे ॥ २६३ ॥ शेषप्रस्तटातिदेशमाह—

एव दुगवुड्ढीए, नेयव्व जाव सत्तमं पयर ।
भागेहिं तओ करयइ, जा तेरसमे दुवे अयरा ॥ २६४ ॥

' एव ' अनेन क्रमेण ' द्विकवृद्ध्या ' सागरोपमत्रयोदशभागद्वयोपचयलक्षणया प्रतिप्रस्तट नेतव्य यावत्सप्तम [ प्रतरम ], प्रतिप्रतरमपूर्वापूर्वभागद्वयवृद्ध्या एक सागरोपम त्रयोदशस्तद्भाग इति परा स्थिति । तदुपरि तु का गति ? इत्याह—' भागाभ्यां ' द्वयलक्षणाभ्यां ' तत ' सप्तमप्रतरउत्कृष्टस्थितिकालात्करण प्रवर्तने यावत् त्रयोदशप्रतरे द्वे अतरे इति, षड्विंशतिसागरोपमत्रयोदशभागेषु सागरो-

पमद्वयभावादिति । जघन्या त्वधस्तनानन्तरप्रस्तटगतोत्कृष्टा स्थितिः सर्वत्र वाच्येति । अयमत्र परमार्थः—यदा कश्चित्सौधर्मेशानपञ्चमप्रस्तटे उत्कृष्टां स्थितिं जिज्ञासति तदा द्वयोः सागरोपमयोस्त्रयोदशभिर्भागे हृते लब्धौ द्वौ सागरोपमत्रयोदशभागौ, स्थापना चेयम्—२/१३, तयोश्च पञ्चभिर्गुणने जाता दश त्रयोदशभागाः, इयमेव तत्रोत्कृष्टा स्थितिरित्येवं प्रतिपाद्यते । एवं सर्वत्र प्रस्तटेषु भावना कार्येति ॥ २६४ ॥ अथोपरितनकल्पेषु प्रतिप्रतरं स्थितिप्रमाणानयनाय करणमाह—

सुरकप्पठिइविसेसो, सगपयरविभाग इच्छसंगुणिओ ।
हेट्ठिल्लठिइसहिओ, इच्छियपयराउ उक्कोसा ॥ २६५ ॥

'सुरकल्पस्थितिविशे(श्ले)षः' सागरोपमपञ्चकादिलक्षणस्तस्य च 'स्वकप्रतरविभागः' स्वकैर्द्वादशादिभिः प्रतरैस्तस्य विभागः क्रियत इत्यर्थः, ततो यत्तत्र लब्धं तद् 'इच्छासंगुणितं' इष्टप्रतरसंख्यालक्षणयेच्छया ताडितं अधस्तनस्थितिसहितम्, किम् ? इत्याह—'इप्सितप्रतरात्' इष्टप्रतरमाश्रित्य 'उत्कृष्टा' उत्कर्षवती स्थितिर्भवति । इदमुक्तं भवति—यदा सनत्कुमारमाहेन्द्रयोस्तृतीयप्रस्तटे उत्कृष्टा स्थितिर्बोद्धुमिष्यते तदा द्वयोः पञ्चानां(सप्तानां)च सागरोपमाणां विशे(श्ले)षो ग्राह्यः, स पञ्चलक्षणः, तस्य च स्वकप्रतरैर्द्वादशलक्षणैर्भागे लब्धाः सागरोपमद्वयलक्षणायां मीलितायां जातानि त्रीणि सागरोपमाणि त्रयं च द्वादशभागानामिति । एवं सर्वत्र भावना कार्येति ॥२६५॥ अथ करणलब्धां प्रतिप्रतरस्थितिं शास्त्रकृत्कण्ठत एव गाथाद्वादशकेनाह—

दो अयरा उ जहण्णा, पढमे पयरे सणंकुमारस्स ।
दो अयरा उक्कोसा, बारस भागा उ पंचऽन्ने ॥ २६६ ॥

[ द्वे 'अतरे दु' द्वे सागरोपमे पुनर्जघन्या स्थिति ] प्रथमे प्रतरे सनत्कुमारस्य। उपलक्षणत्वान्माहेन्द्रस्य च, परं किञ्चित्साधिकत्व वाच्यम्। द्वे अतरे उत्कृष्टा द्वादशभागाश्च पञ्चान्ये सागरोपमस्येति ॥ २६६ ॥ अथोत्तरम्—

पञ्चुत्तरिया वुड्ढी, नवरि विभासेत्थ पत्थडे तइए।
भागेहिँ तओ करणा, तं चेव य जाव सत्तयरा ॥ २६७ ॥

पञ्चोत्तरिका वृद्धि। 'नवरि' त्ति नवर 'विभासा' विशेषभ-णनलक्षणा 'अत्र' पञ्चोत्तरवृद्धौ, क? इत्याह—प्रस्तटे तृतीये, यतस्तत्रैक सागरोपम त्रयश्च द्वादशभागा वृद्धिफल लभ्यत इति। 'भागै' पञ्चमभागलक्षणै 'तत' तृतीयप्रस्तटादुपरि करण 'तचेव तु' तदेव पुन प्रतरवृद्धिलक्षण यावद्द्वादशे प्रतरे सप्तातराणि, द्वाद-शभागाना षष्टिप्रमाणानां द्वयोश्चाधस्तनकल्पसागरोपमयोर्मीलनेन साग-रोपमसप्तकमप्यापदिति ॥ २६७ ॥

सत्तयराइ जहण्णा, पढमे पयरम्मि बम्भलोगस्स।
उक्कोसा सत्ततरा, तिण्णि य छब्भाग निद्दिट्ठा ॥ २६८ ॥

सप्तातराणि जघन्या प्रथमे प्रतरे ब्रह्मलोकस्य। उत्कृष्टा सप्तातराणि त्रयश्च षड्भागा निर्दिष्टा इति ॥ २६८ ॥ शेषप्रस्तटातिदेशमाह—

एव तिगवड्ढीए, विइयाओ आरभेत्तु भागेहिं।
करणं वा नेयव्व, दस अयरा जाव छट्ठम्मि ॥ २६९ ॥

'एव' प्रथमप्रस्तटन्यायेन त्रिकवृद्धौ सत्या द्वितीयात्प्रस्तटादारभ्य भागै करण तावन्नेतव्य दशातराणि यावत् षष्ठे प्रतरे, अष्टादशभमा-

णानां पञ्चभागानां पूर्वस्थितेः सप्तसागरोपमलक्षणया ( णायाश्च ) मीलने एतत्संख्यासंभवादिति ॥ ३६९ ॥

दस अयराइँ जहएणा, पढमे पयरम्मि लंतगस्स ठिती ।
उक्कोसा दस अयरा, चत्तारि य पंचभागा उ ॥ ३७० ॥

दशातराणि जघन्या प्रथमे प्रतरे लान्तकस्य स्थितिः । उत्कृष्टा दशातराणि चत्वारि च पञ्चभागाः ' तुः ' पूर्ववत् ॥ ३७० ॥

चउरुत्तरिया वुड्ढी, बितियाओ आरभेत्तु भागेहिं ।
करणं ता णेयव्वं, चोद्दस अयराइँ पंचमए ॥ ३७१ ॥

' चतुरुत्तरिका ' प्रतिप्रतरं पञ्चभागचतुष्टयोपलक्षणा वृद्धिर्द्वितीयास्प्रस्तटादारभ्य भागैस्ततः करणं तावन्नेतव्यं यावच्चतुर्दशातराणि पञ्चमके प्रतर इति, विंशतिप्रमाणानां पञ्चभागानां दशानां च प्राक्कल्पस्थितिसागरोपमाणां मीलने एतत्संख्यासंभवादिति ॥ ३७१ ॥

चोद्दस अयर जहएणा, पढमे पयरम्मि ठिइ महासुक्के ।
ते चेव उ उक्कोसा, तिगिणि चउरभाग अएणे उ ॥३७२॥

चतुर्दशातराणि जघन्या प्रथमे प्रतरे [स्थितिः] महाशुक्रे । तान्येव च चतुर्दशसागरोपमाण्युत्कृष्टा स्थितिस्त्रयश्चतुर्भागा अन्ये त्विति ॥३७२॥

एवं तिगवुड्ढीए, बितियाओ आरभेत्तु भागेहिं ।
करणं ता नेयव्वं, सत्तरसयरा चउत्थम्मि ॥ ३७३ ॥

एवं त्रिकवृद्ध्या द्वितीया[त्प्रस्तटा]दारभ्य भागैः करणं तावन्नेतव्यं यावत्सप्तदशातराणि चतुर्थे महाशुक्रप्रस्तट इति ॥ ३७३ ॥

सत्तरस जहएणा उ, पढमे पयरम्मि ठिइ सहस्सारे ।
ताई चिय उक्कोसा, चउत्थभागो मुणेयव्वो ॥ ३७४ ॥

सप्तदश जघन्या ' तु ' पूर्णे प्रथमे प्रतरे स्थिति सहस्रारे। तान्येव च सप्तदश सागरोपमाणि उत्कृष्टा स्थितिश्चतुर्थभाग सागरोपमम्यैकस्य मुणितव्य इति ॥ २७४ ॥

एगुत्तरवुड्ढीए, नेयव्व जा चउत्थयं पयरं।
अट्ठारस अयराइं, ठिइ उक्कोसा चउत्थम्मि ॥ २७५ ॥

' एकोत्तरवृद्धया ' एकैकस्य चतुर्भागस्योपचयेन नेतव्य यावच्चतुर्थक प्रतर तत्राष्टादशसागराणि स्थितिरुत्कृष्टा चतुर्थ इति ॥ २७५ ॥

चउपयरा आयम्मी, कप्पा चत्तारि आणयाईया।
अट्ठार जहन्नाई भागुत्तरवुड्ढि कलमाइ ॥ २७६ ॥

चतुष्प्रतरा आनत्या कल्पाश्चत्वार ' आनतादिका ' आनतप्राणताऽऽरणाऽच्युता। तत्रानतप्रतरचतुष्टयविमानेष्वित्यर्थ, अष्टादश जघन्या ' आइ ' त्ति आदिमप्रतरे। अथ ' भागुत्तर ' ति प्रतिप्रतरमपरा [ पर ] सागरोपम[चतु]र्भागाभ्यधिका ' वृद्धि ' जघन्यस्थितेरेवोपचयलक्षणाम्, विभक्तिलोपश्च प्राग्वत्, किम्? इत्याह—कल 'माइ' उक्तमानुत्कृष्टस्थितिरूपतया गणधरादिरिति। तत्र चतुर्थप्रतरे एकोनविंशतिसागरोपमलक्षणम्, चतुर्णां चतुर्भागानामष्टादशसागरोपमाणा च मीलने एतत्सख्यासम्भवात्। एव प्राणताऽऽरणाऽच्युतेष्वपि स्वजघन्यस्थितिमपेक्ष्य प्रतिप्रतर सागरोपमचतुर्भागवृद्ध्योत्कृष्टस्थितिभावना कार्येति ॥ २७६ ॥ अथैतेष्वेव जघन्यस्थितिमाह—

गुणवीसा संपुण्णा, इगवीस ठियाइया जहाक्कमसो।
नवपयरा भागुत्तरवुड्ढी जा उवरिगेवेज्जा ॥ २७७ ॥

एकोनविंशति 'संपुण्ण' त्ति सपूर्णा विंशतिरेव एकविंशतिर्जघन्या

स्थितिर्व्याख्याता 'यथाक्रमशः' यथासंख्यं प्राणताऽऽरणाऽच्युतेष्विति । अथ ग्रैवेयकाण्यधिकृत्याऽऽह—' नवप्रतराणि ' नव प्रतरा येषु तानि तथा सर्वग्रैवेयकाणि भागोत्तरवृद्ध्या एकैकसागरोपमचयलक्षणा (क्षणया) यावत् 'उवरिगेवेज्ज' त्ति उपरितनग्रैवेयकाणि यावन्नेतव्यानि, प्रथमग्रैवेयकादारभ्यैकैकसागरोपमवृद्ध्या पर्यन्तग्रैवेयके एकत्रिंशत्सागरोपमाणीत्यर्थ. ॥ ३७७ ॥ सांप्रतं ग्रन्थमुपसंहरन्नुपदेशमाह—

देविंदयाण लेसो, गुरूहिं मयरागरोसरहिएहिं ।
कहिओ घेत्तव्वो पुण, हासाइविकहरहिएहिं ॥ ३७८ ॥

[ ' देवेन्द्रकाणां ' ] विमानेन्द्रकापरनाम्नां ' लेशः ' वक्तव्यतांशरूपः, किम् ? इत्याह—' गुरु[भिः] ' सूत्रार्थप्रणयनपरैस्तीर्थंकरगणधरादिभिः 'मदरागद्वेषरहितैः' अहङ्काराभिष्वङ्गमत्सरपरित्यक्तैः 'कथितः' निरूपितः, ' ग्रहीतव्यः पुनः मया सांप्रतं कथ्यमानः 'हास्यादिविकथारहितैः ' उपहासविप्लवविरुद्धकथापरिहारिभिर्विनेयैरिति ॥३७८॥

॥ समाप्ता चेयं श्रीमुनिचन्द्रसूरिविरचिता देवेन्द्र नरकेन्द्रवृत्तिरिति ॥



## अथ प्रशस्तिः ।

श्रीमच्चन्द्रकुलावतंसकमल श्रीमान् बृहत्सञ्ज्ञिते
गच्छेऽभूदिह सर्वदेवमुनिपश्चारित्रपात्रं परम् ।
विद्वल्लोकमनश्चमत्कृतिकृत पाण्डित्यतो विश्रुत-
स्तस्मादप्यजनि प्रभुर्व्रतवतां श्रीनेमिचन्द्राभिध ॥१॥
श्रीविनयचन्द्रनामाऽध्यापकशिष्यास्तदन्वये जाता ।
श्रीमुनिचन्द्रमुनीन्द्रास्तैरेषा विरचिता वृत्ति ॥ २ ॥
श्रीमच्चक्रेश्वरसूरिप्रमुखैरपरकोविदसहायैः ।
अणहिलपाटकनगरे विशोध्य नीता प्रमाणमियम् ॥ ३ ॥
प्रत्यक्षर निरूप्यास्य ग्रन्थमान विनिश्चितम् ।
अनुष्टुभा (भां) सहस्रे द्वे पञ्चशती च नवाधिके ॥ ४ ॥
निष्पत्तिमागतेयं वैक्रमवर्षे ऽष्ट्यत्सरे षष्ठ्याम् ।
ज्येष्ठाया तु सकृष्णे सोऽभिक्रमोऽस्त्वसत्कुमतौ ॥ ५ ॥

---

॥ श्रीमन्मुनिचन्द्रसूरिकृतवृत्तियुतं
देवेन्द्रनरकेन्द्रकप्रकरणं
समाप्तम् ॥

# उपयोगी पुस्तको ।

**कुवलयमालाकथा**—આ કથા દાક્ષિણ્યાંક શ્રીઉદ્યોતનસૂરિ એ પ્રાકૃત-ભાષામાં રચેલી છે ઉપરથી શ્રીરત્નપ્રભાસૂરિ એ સુંદર સરલ સંસ્કૃતમાં ગદ્ય પદ્ય મય રચી છે. આરંભિક સંસ્કૃતના અભ્યાસીઓને માટે આ કથાનું વાચન અત્યંત લાભકારક છે.

કિંમત રૂ. ૧-૮-૦

**चैत्यवन्दनमहाभाष्य**—આ ગ્રંથ પ્રાકૃતમાં ગાથાબંધ શ્રીમાન્ શાન્તિ સૂરિ એ રચ્યો છે આ ગ્રંથમાં ચૈત્યવંદન વિધાન તેમજ ચૈત્યવંદન સૂત્રોનું સર્વાંગપૂર્ણ સહેતુક વિવેચન છે. આ ગ્રંથનો સર્વજન લાભ લઇ શકે એ ઉદ્દેશથી તેને છાયા તેમજ ઉપયોગી ટિપ્પન આદિથી વિભૂષિત કરવામાં આવેલ છે.

કિંમત ૧-૧૨-૦

**पातञ्जलयोगदर्शन तथा योगविंशिकासटीक**—આ બન્ને ગ્રંથો સાથે છપાવેલ છે. પહેલો महर्षि पतञ्जलि કૃત અને બીજો શ્રીહરિભદ્રસૂરિ કૃત છે બન્ને ગ્રંથની ટીકા રચનાર न्यायाचार्य श्रीमान् यशोविजयोपाध्याय છે આ બન્ને અલભ્ય ગ્રંથોને ઘણા પરિશ્રમથી શુદ્ધ કરી તૈયાર કર્યા છે. સાથે સંસ્કૃતના અનભ્યાસી તત્ત્વરસિકો આ ગ્રંથનો લાભ લઇ શકે એ હેતુથી તેનુ વિવેચન હીંદી ભાષામાં આપેલ છે. તેમજ યોગના વિષયમાં એક મહાન્ નિબંધ પણ આરંભમાં દાખલ કરેલ છે.

કિંમત ૧-૮-૦

**प्राचीन जैन लेखसंग्रह द्वितीयभाग**—આ ગ્રંથનું સંપાદન કાર્ય શ્રીમાન્ जिनविजयजी એ ઘણીજ યોગ્યતા પૂર્વક કર્યું છે. આ સંગ્રહમાં શત્રુંજય, ગિરનાર, આબુ. તારંગા આદિ મહાતીર્થોના લગભગ ૬૦૦ પુરાતન શિલાલેખો આપેલા છે પાછળ તેને લગતી ઉપયોગી વિસ્તૃત નોંધ આપેલી છે. આ ગ્રંથ કેવો ઉપયોગી છે તે સંબંધમાં વિશેષ નહીં જણાવતાં सरस्वती-साहित्य-बुद्धिप्रकाश આદિ માસિકોના તંત્રીઓના અભિપ્રાયો વાંચવાનીજ માત્ર ભલામણ કરીએ છીએ. આ ગ્રંથની માત્ર પાંચસો કોપી છપાવવામાં આવી છે જેમાંથી ઘણી ખરી તો ખપી ગઇ છે એટલે જેઓને આ ગ્રંથની આવશ્યકતા લાગે તેઓએ સમય ચૂકવો ન જોઇએ નહીંતો જેમ અત્યારે આ ગ્રંથના પ્રથમ ભાગની માગણી આવે છે પણ તે ખલાસ થઇ જવાથી ઘણા નિરાશ થયા છે— તેમ થશે મ્હોટું પુસ્તક તૈયાર થઇ ગયા પછી બીજી વખત તેની આવૃત્તિ થવી એ કેટલી અશક્ય છે તે કહેવાની આવશ્યકતા નહોય. આ ગ્રંથ ડેમી ૯૬ ફોરમનો અને સુશોભિત પાકા બાઇન્ડીંગથી અલંકૃત કરવામાં આવ્યો છે છતાં

કિંમત ૨-૮-૦